यक्षिण्यो यक्षपुत्राश्च महायानबुभुत्सवः ।
आयातु भगवान् शास्ता लङ्कामलयपर्वतम् ॥ १५ ॥

कुम्भकर्णपुरोगाश्च राक्षसाः पुरवासिनः । N 6
श्रोष्यन्ति प्रत्यात्मगतिं महायानपरायणाः ॥ १६ ॥

कृताधिकारा बुद्धेषु करिष्यन्त्यधुना च वै ।
अनुकम्पार्थं मह्यं वै याहि लङ्कां सुतैः सह ॥ १७ ॥

गृहमप्सरवर्गाश्च हाराणि विविधानि च ।
रम्यां चाशोकवनिकां प्रतिगृह्य महामुने ॥ १८ ॥

आज्ञाकरोऽहं बुद्धानां ये च तेषां जिनात्मजाः ।
नास्ति तद्यन्न देयं मे अनुकम्प महामुने ॥ १९ ॥

तस्य तद्वचनं श्रुत्वा उवाच त्रिभवेश्वरः ।
अतीतैरपि यक्षेन्द्र नायकै रत्नपर्वते ॥ २० ॥

प्रत्यात्मधर्मो निर्दिष्टः त्वं चैवाप्यनुकम्पितः ।
अनागताश्च वक्ष्यन्ति गिरौ रत्नविभूषिते ॥ २१ ॥

योगिनां निलयो ह्येष दृष्टधर्मविहारिणाम् ।
अनुकम्प्योऽसि यक्षेन्द्र सुगतानां ममापि च ॥ २२ ॥

अधिवास्य भगवांस्तूष्णीं शमबुद्ध्या व्यवस्थितः ।
आरूढः पुष्पके याने रावणेनोपनामिते ॥ २३ ॥

तत्रैव रावणोऽन्ये च जिनपुत्रा विशारदाः ।
अप्सरैर्हास्यलासाद्यैः पूज्यमानाः पुरीं गताः ॥ २४ ॥ N 7

तत्र गत्वा पुरीं रम्यां पुनः पूजां प्रलब्धवान् ।
रावणाद्यैर्यक्षवर्गैर्यक्षिणीभिश्च पूजितः ।
यक्षपुत्रैर्यक्षकन्याभी रत्नजालैश्च पूजितः ॥ २५ ॥

रावणेनापि बुद्धस्य हारा रत्नविभूषिताः ।
जिनस्य जिनपुत्राणामुत्तमाङ्गेषु स्थापिताः ॥ २६ ॥

प्रगृह्य पूजां भगवान् जिनपुत्रैश्च पण्डितैः ।
धर्मं विभावयामास प्रत्यात्मगतिगोचरम् ॥ २७ ॥

रावणो यक्षवर्गाश्च संपूज्य वदतां वरम् ।
महामतिं पूजयन्ति अध्येषन्ति पुनः पुनः ।
त्वं प्रष्टा सर्वबुद्धानां प्रत्यात्मगतिगोचरम् ॥ २८ ॥

अहं[1] हि श्रोता यक्षाश्च जिनपुत्राश्च सन्निह ।
अध्येषयामि त्वां यक्षा जिनपुत्राश्च पण्डिताः ॥ २९ ॥
वादिनां त्वं महावादी योगिनां योगवाहकः ।
अध्येषयामि त्वां भक्त्या नयं पृच्छ विशारद ॥ ३० ॥
तीर्थ्यदोषैर्विनिर्मुक्तं प्रत्येकजिनश्रावकैः ।
N 8 प्रत्यात्मधर्मताशुद्धं बुद्धभूमिप्रभावकम् ॥ ३१ ॥
निर्माय भगवांस्तत्र शिखरान् रत्नभूषितान् ।
अन्यानि चैव दिव्यानि रत्नकोटीरलंकृताः ॥ ३२ ॥
एकैकस्मिन् गिरिवरे आत्मभावं विदर्शयन् ।
तत्रैव रावणो यक्ष एकैकस्मिन् व्यवस्थितः ॥ ३३ ॥
अत्र ताः पर्षदः सर्वा एकैकस्मिन् हि दृश्यते ।
सर्वक्षेत्राणि तत्रैव ये च तेषु विनायकाः ॥ ३४ ॥
राक्षसेन्द्रश्च तत्रैव ये च लङ्कानिवासिनः ।
तत्प्रतिस्पर्धिनी लङ्का जिनेन अभिनिर्मिता ।
अन्याश्चाशोकवनिका वनशोभाश्च तत्र याः ॥ ३५ ॥
एकैकस्मिन् गिरौ नाथो महामतिप्रचोदितः ।
धर्मं दिदेश यक्षाय प्रत्यात्मगतिसूचकम् ।
दिदेश निखिलं सूत्रं शतसाहस्रिकं गिरौ ॥ ३६ ॥
शास्ता च जिनपुत्राश्च तत्रैवान्तर्हितास्ततः ।
अद्राक्षीद्रावणो यक्ष आत्मभावं गृहे स्थितम् ॥ ३७ ॥
चिन्तेति किमिदं कोऽयं देशितं केन वा श्रुतम् ।
किं दृष्टं केन वा दृष्टं नगरो वा क्व सौगतः ॥ ३८ ॥
तानि क्षेत्राणि ते बुद्धा रत्नशोभाः क्व सौगताः ।
N 9 स्वप्नोऽयमथ वा माया नगरं गन्धर्वशब्दितम् ॥ ३९ ॥
तिमिरो मृगतृष्णा वा स्वप्नो वन्ध्याप्रसूयतम् ।
अलातचक्रधूमो वा यदहं दृष्टवानिह ॥ ४० ॥
अथ वा धर्मता ह्येषा धर्माणां चित्तगोचरे ।
न च बालावबुध्यन्ते मोहिता विश्वकल्पनैः ॥ ४१ ॥
न द्रष्टो[2] न च द्रष्टव्यं न वाच्यो नापि वाचकः ।
अन्यत्र हि विकल्पोऽयं बुद्धधर्माकृतिस्थितिः ।
ये पश्यन्ति यथादृष्टं न ते पश्यन्ति नायकम् ॥ ४२ ॥

---

१ N अयं for अहं. २ N दृष्टा.

अप्रवृत्तिविकल्पश्च यदा बुद्धं न पश्यति ।
अप्रवृत्तिभवे बुद्धः संबुद्धो यदि पश्यति ॥ ४३ ॥

समनन्तरप्रतिविबुद्धे परावृ[1]त्ताश्रये स्वचित्तदृश्यमात्राधिगमेऽविकल्पप्रचारस्थितस्य
लङ्काधिपतेः पूर्वकुशलमूलसंचोदितस्य सर्वशास्त्रविदग्धबुद्धेर्यथातथ्यदर्शनस्य अपरप्रणेयस्य
स्वबुद्धिविचालनकुशलस्य तर्कदृष्टिव्यपेतदर्शनस्य अपरप्रणेयस्य महायोगयोगिनो महाविश्वरूप-
धारिणः उपायकौशल्यगतिंगतस्य सर्वभूम्युत्तरोत्तरस्वलक्षणाधिगमनकुशलस्य चित्तमनो-
मनोविज्ञानस्वभावविवेकरतस्य त्रिसंततिव्यवच्छिन्नदर्शनस्य सर्वकारणतीर्थ्यव्यपेतबुद्धेः तथा- N 10
गतगर्भबुद्धभूम्यध्यात्मसमापन्नस्य स्थितबुद्धबुद्धेर्गगनादध्यात्मवेद्यशब्दमश्रौषीत्—साधु साधु
लङ्काधिपते, साधु खलु पुनस्त्वं लङ्काधिपते । एवं शिक्षितव्यं योगिना यथा त्वं शिक्षसे ।
एवं च तथागता द्रष्टव्याः धर्माश्च, यथा त्वया दृष्टाः । अन्यथा दृश्यमाने उच्छेदमाश्रयः ।
चित्तमनोमनोविज्ञानविगतेन त्वया सर्वधर्मा विभावयितव्याः । अन्ते[2]श्चारिणा न बाह्यार्थ-
दृष्ट्यभिनिविष्टेन । न च त्वया श्रावकप्रत्येकबुद्धतीर्थाधिगमपदार्थगोचरपतितदृष्टिसमाधिना
भवितव्यम् । नाख्यायिकेतिहासरतेन भवितव्यम् । न स्वभावदृष्टिना, न राजाधिपत्यमद-
पतितेन, न षड्ध्यानादिध्यायिना । एष लङ्काधिपते अभिसमयो महायोगिनां परप्रवाद-
मथनानामकुशलदृष्टिदालनानामात्मदृष्टिव्यावर्तनकुशलानां सूक्ष्ममभिविज्ञानपरावृत्तिकुशलानां
जिनपुत्राणां महायानचरितानाम् । तथागतस्वप्रत्यात्मभूमिप्रवेशाधिगमाय त्वया योगः
करणीयः । एवं क्रियमाणे भूयोऽप्युत्तरोत्तरविशोधकोऽयं लङ्काधिपते मार्गो यस्त्वया परि-
गृहीतः समाधिकौशलसमापत्त्या । न च श्रावकप्रत्येकबुद्धतीर्थ्यानुप्रवेशसुखगोचरो यथा N 11
बालतीर्थयोगयोगिभिः कल्प्यते आत्मग्राहदृश्यलक्षणाभिनिविष्टैर्भूतगुणद्रव्यानुचारिभिरविद्या-
प्रत्ययदृष्ट्यभिनिवेशाभिनिविष्टैः शून्यतोत्पादविक्षिप्तैर्विकल्पाभिनिविष्टैर्लक्ष्यलक्षणपतिता-
शयैः । विश्वरूपगतिप्रापकोऽयं लङ्काधिपते स्वप्रत्यात्मगतिबोधकोऽयं महायानाधिगमः ।
विशेषभवोपपत्तिप्रतिलम्भाय च प्रवर्तते । पटलकोशविविधविज्ञानतरंगव्यावर्तकोऽयं
लङ्काधिपते महायानयोगप्रवेशो न तीर्थ्ययोगाश्रयपतनम् । तीर्थ्ययोगो हि लङ्काधिपते
तीर्थ्यानामात्माभिनिवेशात्प्रवर्तते । विज्ञानस्वभावद्वयार्थानामभिनिवेशदर्शनादसौम्ययोगस्तीर्थ-
कराणाम् । तत्साधु लङ्काधिपते एतमेवार्थमनुविचिन्तयेः । यथा विचिन्तितवांस्तथागतदर्श-
नात् । एतदेव तथागतद[3]र्शनम् ॥

अथ तस्मिन्नन्तरे रावणस्यैतदभवत्—यन्न्वहं पुनरपि भगवन्तं सर्वयोगवशवर्तिनं
तीर्थ्ययोगव्यावर्तकं प्रत्यात्मगतिगोचरोद्भावकं नैर्मितनैर्माणिकव्यपेतमधिगमबुद्धिर्यद्योगिनां
योगाभिसमयकाले समाधिमुखे समापन्नानामधिगमो भवति । तस्य च अधिगमाद्योगिनां N 12
योगशब्दो निपात्यते अधिगमनेनेति । तदहं कारुणिकं क्लेशेन्धनविकल्पक्षयकरं तं जिनपुत्रैः
परिवृतं सर्वसत्त्वचित्ताशयानुप्रविष्टं सर्वगतं सर्वज्ञं क्रियालक्षणविनिवृत्तं तयैवमृद्ध्या

---

१ N परावृत्ताश्रये. २ N अन्तश्चालिना for °चारिणा. ३ N तथागतदर्थनम् for °दर्शनम्.

पश्येयम्, तद्दर्शनान्नाधिगतमधिगच्छेयम्, अधिगतं च मे निर्विकल्पाचारः सुखसमाधि-
समापत्तिविहारस्तथागतगतिभूमिप्रापको विवृद्धिं यायात् ॥

अथ भगवांस्तस्यां वेलायां लङ्काधिपतेरनुत्पत्तिकधर्मक्षान्त्यधिगतं विदित्वा तयैव
शोभया दशग्रीवस्यानुकम्पया पुनरप्यात्मानं शिखरे सुबहुरत्नखचिते रत्नजालवितते दर्शयति
स्म। अद्राक्षीद्दशग्रीवो लङ्काधिपतिः पुनरपि दृष्टानुभूतां शोभां शिखरे तथागतमर्हन्तं
सम्यक्संबुद्धं द्वात्रिंशद्वरलक्षणविभूषिततनुम्। स्वात्मभावं चैकैकस्मिन् गिरौ तथागतानां
पुरतः सम्यक्संबुद्धानां महामतिना सार्धं तथागतप्रत्यात्मगतिगोचरकथां प्रकुर्वन्तं यक्षैः
N 13 परिवृतं तां देशनापाठकथां कथयन्तम्। ते च क्षेत्राः सनायकाः ॥

अथ भगवान् पुनरपि तस्यां वेलायां पर्षदमवलोक्य बुद्ध्या न मांसचक्षुषा सिंह-
राजवद्विजृम्भ्य महाहासमहसत्। ऊर्णाकोशाच्च रश्मिं निश्चार्यमाणः पार्श्वोरुकटिकायाच्च
श्रीवत्सात्सर्वरोमकूपेभ्यो युगान्ताग्निरिव दीप्यमानः तेजसेन्द्रधनुरुदयभास्करोपमेन प्रभा-
मण्डलेन देदीप्यमानः शक्रब्रह्मलोकपालैर्गगनतले निरीक्ष्यमाणः सुमेरुशृङ्गप्रतिस्पर्धिनि
शिखरे निषण्णो महाहासमहसत्। अथ तस्या बोधिसत्त्वपर्षदः तेषां च शक्रब्रह्मादीनामेत-
दभवत्—को नु खल्वत्र हेतुः, कः प्रत्ययो यद्भगवान् सर्वधर्मवशवर्ती महाहासं स्मितपूर्वकं
हसति? रश्मींश्च स्वविग्रहेभ्यो निश्चारयति? निश्चार्य तूष्णीमभवत् स्वप्रत्यात्मार्यज्ञानगोचर-
समाधिमुखे पतिताशयोऽविस्मितः सिंहावलोकनतया दिशोऽवलोक्य रावणस्यैव योगगति-
प्रचारमनुविचिन्तयमानः ॥

N 14 अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पूर्वमेवाध्येषितो रावणस्यानुकम्पामुपादाय
तस्या बोधिसत्त्वपर्षदश्चित्ताशयविचारमाज्ञाय अनागतां जनतां चावलोक्य देशनापाठाभि-
रतानां सत्त्वानां चित्तविभ्रमो भविष्यतीति यथारुतार्थाभिनिविष्टानां सर्वश्रावकप्रत्येकबुद्ध-
तीर्थ्ययोगबलाभिनिविष्टानां तथागता अपि भगवन्तो विनिवृत्तविज्ञानविषया महाहासं
हसन्ति। तेषां कौतूहलविनिवृत्त्यर्थं भगवन्तं परिपृच्छति स्म—कः खल्वत्र हेतुः, कः प्रत्ययः
स्मितस्य प्रवृत्तये? भगवानाह—साधु साधु महामते, साधु खलु पुनस्त्वं महामते, लोक-
स्वभावमवलोक्य कुदृष्टिपतितानां च लोकानां त्रैकाल्यचित्तावबोधाय मां प्रष्टुमारब्धः। एवं
पण्डितैः परिपृच्छनजातीयैर्भवितव्यं स्वपरोभयार्थम्। एष महामते रावणो लङ्काधिपतिः
पूर्वकानपि तथागतानर्हतः सम्यक्संबुद्धान् प्रश्नद्वयं पृष्टवान्। मामप्येतर्हि प्रष्टुकामो यदना-
लीढं सर्वश्रावकप्रत्येकबुद्धतीर्थ्ययोगयोगिनां प्रश्नद्वयप्रभेदगतिलक्षणं विभावयितुम्। य एष
प्रष्टुकामो दशग्रीवोऽनागतानपि जिनान् प्रक्ष्यति ॥

जानन्नेव भगवाँल्लङ्काधिपतिमेतदवोचत्—पृच्छ त्वं लङ्काधिपते। कृतस्ते तथागते-
N 15 नावकाशः। मा विलम्ब प्रचलितमौलिन्। यद्यदेवाकाङ्क्षसि, अहं ते तस्य तस्यैव प्रश्नस्य
व्याकरणेन चित्तमाराधयिष्यामि। यथा त्वं परावृत्तविकल्पाश्रये भूमिविपक्षकौशलेन
प्रविचयबुद्ध्या विचारयमाणः प्रत्यात्मनयलक्षणसमाधिसुखविहारं समाधिबुद्धैः परिगृहीतः

शमथसुखव्यवस्थितः श्रावकप्रत्येकबुद्धसमाधिपक्षानतिक्रम्य अचलासाधुमतीधर्ममेघाभूमिव्यवस्थितो धर्मनैरात्म्ययथातथाकुशलो महारत्नपद्मविमाने समाधिजिनाभिषेकतां प्रतिलप्स्यसे। तदनुरूपैः पद्मैः स्वकायविचित्राधिष्ठानाधिष्ठितैस्तैः पद्मैः स्वकायं निषण्णं द्रक्ष्यसि, अन्योन्यवक्त्रमुखनिरीक्षणं च करिष्यसि । एवमचिन्त्योऽसौ विषयः यदेकेनाभिनिर्हारकौशलेनाभिनिर्हृतश्चर्याभूमौ स्थितः । उपायकौशलपरिग्रहाभिनिर्हाराभिनिर्हृते तमचिन्त्यविषयमनुप्राप्स्यसि, बहुरूपविकारतां च तथागतभूमिम् । यददृष्टपूर्वं श्रावकप्रत्येकबुद्धतीर्थ्यब्रह्मेन्द्रोपेन्द्रादिभिस्तं प्राप्स्यसि ॥

अथ खलु लङ्काधिपतिर्भगवता कृतावकाश उत्थाय तस्माद्रश्मिविमलप्रभाद्रत्नपद्मसदृशाद्रत्नशिखरात् साप्सरोगणपरिवृतो विविधैरनेकविधैर्नानाप्रकारैः N 16 पुष्पमाल्यगन्धधूपविलेपनच्छत्रध्वजपताकाहारार्धहारकिरीटमुकुटैरन्यैश्च अदृष्टश्रुतपूर्वैराभरणविशेषैर्विशिष्टैस्तूर्यतालावचरैर्देवनागयक्षराक्षसगन्धर्वकिन्नरमहोरगमनुष्यातिक्रान्तैः सर्वकामधातुपर्यापन्नान् वाद्यभाण्डानभिनिर्माय ये चान्येषु बुद्धक्षेत्रेषु तूर्यविशेषा दृष्टाः, तानभिनिर्माय भगवन्तं बोधिसत्त्वांश्च रत्नजालेनावष्टभ्य नानावस्त्रोच्छ्रितपताकं कृत्वा [1]सप्त तालान् गगनेऽभ्युद्गम्य महापूजामेघानभिप्रवृष्य तूर्यतालावचराणि निर्नाद्य तस्माद्गगनादवतीर्य सूर्यविद्युत्प्रभे द्वितीये महारत्नपद्मालंकृतौ रत्नशिखरे निषसाद । निषद्य उपचारात्स्मितपूर्वं भगवता कृतावकाशो भगवन्तं प्रश्नद्वयं पृच्छति स्म–पृष्टा मया पूर्वकास्तथागता अर्हन्तः सम्यक्संबुद्धाः । तैश्चापि विसर्जितम्। भगवन्तमप्येतर्हि पृच्छामि । देशनापाठे चायं बुद्धैस्त्वया चावश्यमनुवर्णितं भविष्यति । निर्मितनिर्माणभाषितमिदं भगवन् धर्मद्वयम्। न मौनैस्तथागतैर्भाषितम्। मौना हि भगवंस्तथागताः समाधिसुखगोचरमेवोद्भावयन्ति । न च गोचरं विकल्पयन्ति । तं देशयन्ति । तत्साधु मे भगवान् स्वयमेव धर्मवशवर्ती धर्मद्वयं तथागतोऽर्हन् सम्यक्संबुद्धो देशयतु । श्रोष्यन्तीमे जिनपुत्रा अहं च ॥

भगवानाह–ब्रूहि लङ्काधिपते धर्मद्वयम्। राक्षसेन्द्र आह–किरीटाङ्गदहारवज्रसूत्रावबद्धाभरणतनुशोभाशोभित, धर्मा एव प्रहातव्याः प्रागेवाधर्माः । तत्कथं भगवन् धर्मद्वयं प्रहाणं भवति ? के चाधर्मा धर्माः ? कथं सति द्वित्वं प्रहाणधर्माणां विकल्पलक्षणपतितानां विकल्पस्वभावाभावानामभौतिक[2]भौतिकानामालयविज्ञानापरिज्ञानादविशेषलक्षणानां केशोण्डुकस्वभावावस्थितानामशुद्धक्षयज्ञानविषयिणाम् । तत्कथं तेषां प्रहाणमेवंभाविनाम् ?

भगवानाह–ननु लङ्काधिपते, दृष्टो घटादीनां भेदनात्मकानां विनाशधर्मिणां बालविकल्पगोचरैः प्रतिविभागः । N 17 एवमिहापि किं न गृह्यते ? अस्ति धर्माधर्मयोः प्रतिविभागो बालप्रतिविकल्पमुपादाय, न त्वार्यज्ञानाधिगमं प्रति दर्शनेन । तिष्ठन्तु तावल्लङ्काधिपते घटादयो भावा विचित्रलक्षणपतिता बालानां न त्वार्याणाम् । एकस्वाभाविकानामेकज्वालो-

---

१ N सप्ततालाङ्गने for °तालान् गगने.　२ N अभौति° for अभौतिक°.

द्धवप्रज्वालितानां गृहभवनोद्यानप्रासादप्रतिष्ठापितानां दृष्टः प्रतिविभागः इन्धनवशाद्दीर्घ-
N 18 ह्रस्वप्रभाल्पमहाविशेषाश्च । एवमिहापि किं न गृह्यते ? अस्ति धर्माधर्मयोः प्रतिविभागः ।
न केवलमग्निज्वालाया एकसंतानपतिताया दृष्टोऽर्चिषश्च प्रतिविभागः । एकबीजप्रसूतानां
यत्संतानानामपि लङ्काधिपते नालाङ्कुरगण्डपर्वपत्रपलाशपुष्पफलशाखाविशेषाः । एवं
सर्वधर्मप्ररोहधर्मिणां बाह्यानामाध्यात्मिकानामप्यविद्यानिर्यातानां स्कन्धधात्वायतनोपगानां
सर्वधर्माणां त्रैधातुकोपपन्नानां दृष्टसुखसंस्थानामभिलाप्यगतिविशेषाः । विज्ञानानामेकलक्ष-
णानां विषयाभिग्रहणप्रवृत्तानां दृष्टो हीनोत्कृष्टमध्यमविशेषो व्यवदानाव्यवदानतश्च कुशला-
कुशलतश्च । न केवलमेषां लङ्काधिपते धर्माणां प्रतिविभागविशेषः, योगिनामपि योगमभ्य-
स्यतां योगमार्गे प्रत्यात्मगतिलक्षणविशेषो दृष्टः । किमङ्ग पुनर्धर्माधर्मयोः प्रतिविकल्पप्रवृत्तयो-
र्विशेषो न भवति ? भवत्येव ॥

अस्ति लङ्काधिपते धर्माधर्मयोः प्रतिविभागो विकल्पलक्षणत्वात् । तत्र लङ्काधिपते
धर्माः कतमे ? यदुत एते तीर्थ्यश्रावकप्रत्येकबुद्धबालविकल्पकल्पिताः । कारणतो गुणद्रव्य-
पूर्वका धर्मा इत्युपदिश्यन्ते, ते प्रहातव्याः । न लक्षणतः प्रतिविकल्पयितव्याः । स्वचित्त-
N 19 दृश्यधर्मताभिनिवेशान्न सन्ति घटादयो धर्मा बालपरिकल्पिता अलब्धशरीराः । एवं विदर्श-
नया प्रतिविपश्यतः प्रहीणा भवन्ति ॥

तत्र अधर्माः कतमे ? येऽलब्धात्मका लक्षणविकल्पाप्रचारा धर्मा अहेतुकाः तेषा-
मप्रवृत्तिर्दृष्टा भूताभूततः । अथ धर्मस्य प्रहाणं भवति । पुनरप्यलब्धात्मका धर्माः कतमे ?
यदुत शशखरोष्ट्रवाजिविषाणवन्ध्यापुत्रप्रभृतयो धर्माः । अलब्धात्मकत्वान्न लक्षणतः कल्प्याः ।
तेऽन्यत्र संव्यवहारार्था अभिधीयन्ते, नाभिनिवेशतो यथा घटादयः । यथा ते प्रहेया अग्रह-
णतो विज्ञानेन, तथा विकल्पभावा अपि प्रहेयाः । अतो धर्माधर्मयोः प्रहाणं भवति ।
यदुक्तवानसि लङ्काधिपते धर्माधर्माः कथं प्रहेया इति, तदेतदुक्तम् ॥

यदप्युक्तवानसि लङ्काधिपते—पूर्वका अपि तथागता अर्हन्तः सम्यक्संबुद्धा मया
पृष्टाः, तैश्च विसर्जितं पूर्वम् । इति लङ्काधिपते विकल्पस्यैतदधिवचनम् । अतीतोऽप्येवं
विकल्प्यते अतीतः । एवमनागतोऽधुनापि धर्मतया । निर्विकल्पास्तथागताः सर्वविकल्प-
N 20 प्रपञ्चातीताः । न यथा रूपस्वभावो विकल्प्यते[1] । अन्यत्राज्ञानाधिगमतः सुखार्थं विभाव्यते ।
प्रज्ञया अनिमित्तचारिणः । अतो ज्ञानात्मकास्तथागता ज्ञानशरीराः । न कल्पन्ते न
कल्प्यन्ते । केन न कल्पन्ते ? मनसा आत्मतो जीवतः पुद्गलतः । कथं न विकल्पन्ते ?
मनोविज्ञानेन विषयार्थहेतुकेन यथा रूपलक्षणसंस्थानाकारतश्च । अतो विकल्पाविकल्पा-
गतेन भवितव्यम् ॥

---

१ N विकल्पते.

अपि च लङ्काधिपते भित्तिखचितविग्रहसमः सत्त्वप्रचारः । निश्चेष्टो लङ्काधिपते लोकसंनिवेशः कर्मक्रियारहितोऽसत्त्वात्सर्वधर्माणाम् । न चात्र कश्चिच्छृणोति श्रूयते वा । निर्मितप्रतिमो हि लङ्काधिपते लोकसंनिवेशः । न च तीर्थ्यबालयोगिनो विभावयन्ति । य एवं पश्यति लङ्काधिपते, स सम्यक्पश्यति । अन्यथा पश्यन्तो विकल्पे चरन्तीति । स्वविकल्पा[1] द्विधा गृह्णन्ति । तद्यथा दर्पणान्तर्गतं स्वबिम्बप्रतिबिम्बं जले वा स्वाङ्गच्छाया वा ज्योत्स्नादीपप्रदीपिते[2] वा गृहे वा अङ्गच्छाया प्रतिश्रुत्कानि । अथ स्वविकल्पग्रहणं N 21
प्रतिगृह्य धर्माधर्मं प्रतिविकल्पयन्ति । न च धर्माधर्मयोः प्रहाणेन चरन्ति । विकल्पयन्ति पुष्णन्ति, न प्रशमं प्रतिलभन्ते । एकाग्रस्यैतदधिवचनम्—तथागतगर्भस्वप्रत्यात्मार्यज्ञान-गोचरस्यैतत्प्रवेशो यत्समाधिः परमो जायत इति ॥

रावणाध्येषणापरिवर्तो नाम प्रथमः ॥



१ N सविकल्पा.  २ N °प्रदीपे for °प्रदीपिते.

## २ षट्त्रिंशत्साहस्रसर्वधर्मसमुच्चयो नाम द्वितीयः परिवर्तः ।

N 22 अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो महामतिर्बोधिसत्त्वसहितः सर्वबुद्धक्षेत्रानुचारी बुद्धानुभावेन उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तं गाथाभिरभ्यष्टावीत्—

उत्पादभङ्गरहितो लोकः खपुष्पसंनिभः ।
सदसन्नोपलब्धस्ते प्रज्ञया कृपया च ते ॥ १
मायोपमाः सर्वधर्माः चित्तविज्ञानवर्जिताः ।
सदसन्नोपलब्धास्ते प्रज्ञया कृपया च ते ॥ २ ॥
शाश्वतोच्छेदवर्ज्यश्च[1] लोकः स्वप्नोपमः सदा ।
सदसन्नोपलब्धस्ते प्रज्ञया कृपया च ते ॥ ३ ॥
मायास्वप्नस्वभावस्य धर्मकायस्य कः स्तवः ।
भावानां निःस्वभावानां योऽनुत्पादः स संभवः ॥ ४ ॥
N 23 इन्द्रियार्थविसंयुक्तमदृश्यं यस्य दर्शनम् ।
प्रशंसा यदि वा निन्दा तस्योच्येत कथं मुने ॥ ५ ॥
धर्मपुद्गलनैरात्म्यं क्लेशज्ञेयं च ते सदा ।
विशुद्धमानिमित्तेन प्रज्ञया कृपया च ते ॥ ६ ॥
न निर्वासि निर्वाणेन निर्वाणं त्वयि संस्थितम् ।
बुद्धबोद्धव्यरहितं सदसत्पक्षवर्जितम् ॥ ७ ॥
ये पश्यन्ति मुनिं शान्तमेवमुत्पत्तिवर्जितम् ।
ते भोन्ति निरुपादाना इहामुत्र निरञ्जनाः ॥ ८ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमाभिः सारूप्याभिर्गाथाभिरभिष्टुत्य स्वनामगोत्रं भगवते संश्रावयति स्म—

महामतिरहं भगवन् महायानगतिं गतः ।
अष्टोत्तरं प्रश्नशतं पृच्छामि वदतां वरम् ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा बुद्धो लोकविदां वरः ।
निरीक्ष्य परिषदं सर्वामलपी सुगतात्मजम् ॥ १० ॥
पृच्छन्तु मां जिनसुतास्त्वं च पृच्छ महामते ।
अहं ते देशयिष्यामि प्रत्यात्मगतिगोचरम् ॥ ११ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवता कृतावकाशो भगवतश्चरणयोर्निपत्य N 24 भगवन्तं प्रश्नं परिपृच्छति स्म—

---

१ N °वर्जश्च.

कथं हि शुध्यते तर्कः कस्मात्तर्कः प्रवर्तते ।
कथं हि दृश्यते भ्रान्तिः कस्माद्भ्रान्तिः प्रवर्तते ॥ १२ ॥
कस्मात्क्षेत्राणि निर्माणा लक्षणं तीर्थिकाश्च ये ।
निराभासः क्रमः केन जिनपुत्राश्च ते कुतः ॥ १३ ॥
मुक्तस्य गमनं कुत्र बद्धः कः केन मुच्यते ।
ध्यायिनां विषयः कोऽसौ कथं यानत्रयं भवेत् ॥ १४ ॥
प्रत्यये जायते किं तत्कार्यं किं कारणं च किम् ।
उ[1]भयान्तकथा केन कथं वा संप्रवर्तते ॥ १५ ॥
आरूप्या च समापत्तिर्निरोधश्च कथं भवेत् ।
संज्ञानिरोधश्च कथं कथं कस्माद्धि मुच्यते ॥ १६ ॥
क्रिया प्रवर्तते केन गमनं देहधारिणाम् ।
कथं दृश्यं विभावो कथं कथं भूमिषु वर्तते ॥ १७ ॥
निर्भिद्येत्रिभवं कोऽसौ किं स्थानं का तनुर्भवेत् ।
स्थितः प्रवर्तते कुत्र जिनपुत्रः कथं भवेत् ॥ १८ ॥
अभिज्ञा लभते केन वशिताश्च समाधयः ।
समाध्यते कथं चित्तं ब्रूहि मे जिनपुंगव ॥ १९ ॥
आलयं च कथं कस्मान्मनोविज्ञानमेव च ।
कथं प्रवर्तते दृश्यं कथं दृश्यान्निवर्तते ॥ २० ॥ N 25
गोत्रागोत्रं कथं केन चित्तमात्रं भवेत्कथम् ।
लक्षणस्य व्यवस्थानं नैरात्म्यं च कथं भवेत् ॥ २१ ॥
कथं न विद्यते सत्त्वः संवृत्या देशना कथम् ।
कथं शाश्वतउच्छेददर्शनं न प्रवर्तते ॥ २२ ॥
कथं हि तीर्थिकास्त्वं च लक्षणैर्न विरुध्यसे ।
नैयायिकाः कथं ब्रूहि भविष्यन्ति अनागते ॥ २३ ॥
शून्यता च कथं केन क्षणभङ्गश्च ते कथम् ।
कथं प्रवर्तते गर्भः कथं लोको निरीहिकः ॥ २४ ॥
मायास्वप्नोपमः केन कथं गन्धर्वसंनिभः ।
मरीचिदकचन्द्राभः केन लोको ब्रवीहि मे ॥ २५ ॥
बोध्यङ्गानां कथं केन बोधिपक्षा भवेत्कुतः ।
मराश्च देशसंक्षोभो भवदृष्टिः कथं भवेत् ॥ २६ ॥

---

1 N उभयोऽन्तकथा for उभयान्तकथा.

अजातमनिरुद्धं च कथं खपुष्पसंनिभम् ।
कथं च बुध्यसे लोकं कथं ब्रूषे निरक्षरम् ॥ २७ ॥
निर्विकल्पा भवेत्केन कथं च गगनोपमाः ।
तथता भवेत्कतिविधा चित्तं पारमिताः कति ॥ २८ ॥
भूमिक्रमो भवेत्केन निराभासगतिश्च का ।
N 26 नैरात्म्यं च द्विधा केन कथं ज्ञेयं विशुध्यति ॥ २९ ॥
ज्ञानं कतिविधं नाथ शीलं सत्त्वाकराणि च ।
केन प्रवर्तिता गोत्राः सुवर्णमणिमुक्तजाः ॥ ३० ॥
अभिलापो जानिकः केन वैचित्रसत्त्वभावयोः ।
विद्यास्थानकलाश्चैव कथं केन प्रकाशितम् ॥ ३१ ॥
गाथा भवेत्कतिविधा गद्यं पद्यं भवेत्कथम् ।
कथं युक्तिः कतिविधा व्याख्यानं च कथंविधम् ॥ ३२ ॥
अन्नपानं च वैचित्र्यं मैथुनं जायते कथम् ।
राजा च चक्रवर्ती च मण्डली च कथं भवेत् ॥ ३३ ॥
रक्ष्यं भवेत्कथं [1]राज्यं देवकायाः कथंविधाः ।
भूनक्षत्रगणाः केन सोमभास्करयोः कथम् ॥ ३४ ॥
विद्यास्थानं भवेत्किं च मोक्षो योगी कतिविधः ।
शिष्यो भवेत्कतिविध आचार्यश्च भवेत्कथम् ॥ ३५ ॥
बुद्धो भवेत्कतिविधो जातकाश्च कथंविधाः ।
मारो भवेत्कतिविधः पाषण्डाश्च कतिविधाः ॥ ३६ ॥
स्वभावस्ते कतिविधश्चित्तं कतिविधं भवेत् ।
प्रज्ञप्तिमात्रं च कथं ब्रूहि मे वदतांवर ॥ ३७ ॥
N 27 घनाः खे पवनं केन स्मृतिर्मेधो कथं भवेत् ।
तरुवल्ल्यः कथं केन ब्रूहि मे त्रिभवेश्वर ॥ ३८ ॥
हया गजा मृगाः केन ग्रहणं यान्ति बालिशाः ।
[2]उहोडिमा नराः केन ब्रूहि मे चित्तसारथे ॥ ३९ ॥
षड्ऋतुग्रहणं केन कथमिच्छन्तिको भवेत् ।
स्त्रीपुंनपुंसकानां च कथं जन्म वदाहि मे ॥ ४० ॥
कथं व्यावर्तते योगात्कथं योगः प्रवर्तते ।
कथं चैवंविधा योगे नराः स्थाप्या वदाहि मे ॥ ४१ ॥

---

१ N राज्या for राज्यं which is supported by T. २ All Mss. read उहात्रिमा; Suzuki renders the term as meaning 'fools and despicables'.

गत्यागतानां सत्त्वानां किं लिङ्गं किं च लक्षणम् ।
धनेश्वरो कथं केन ब्रूहि मे गगनोपम ॥ ४२ ॥

शाक्यवंशः कथं केन कथमिक्ष्वाकुसंभवः ।
ऋषिर्दीर्घतपाः केन कथं तेन प्रभावितम् ॥ ४३ ॥

त्वमेव कस्मात्सर्वत्र सर्वक्षेत्रेषु दृश्यसे ।
नामैश्चित्रैस्तथारूपैर्जिनपुत्रैः परीवृतः ॥ ४४ ॥

अभक्ष्यं हि कथं मांसं कथं मांसं निषिध्यते ।
क्रव्यादगोत्रसंभूता मासं भक्ष्यन्ति केन वै ॥ ४५ ॥

सोमभास्करसंस्थाना मेरुपद्मोपमाः कथम् ।
श्रीवत्ससिंहसंस्थानाः क्षेत्राः केन वदाहि मे ॥ ४६ ॥

व्यत्यस्ता अधमूर्धाश्च इन्द्रजालोपमाः कथम् । N 28
सर्वरत्नमया क्षेत्राः कथं केन वदाहि मे ॥ ४७ ॥

वीणापणवसंस्थाना नानापुष्पफलोपमाः ।
आदित्यचन्द्रविरजाः कथं केन वदाहि मे ॥ ४८ ॥

केन निर्माणिका बुद्धाः केन बुद्धा विपाकजाः ।
तथता ज्ञानबुद्धा वै कथं केन वदाहि मे ॥ ४९ ॥

कामधातौ कथं केन न विबुद्धो वदाहि मे ।
अकनिष्ठे किमर्थं तु वीतरागेषु बुध्यसे ॥ ५० ॥

निर्वृते सुगते कोऽसौ शासनं धारयिष्यति ।
कियत्स्थायी भवेच्छास्ता कियन्तं स्थास्यते नयः ॥ ५१ ॥

सिद्धान्तस्ते कतिविधो दृष्टिश्चापि कथंविधा ।
विनयो भिक्षुभावश्च कथं केन वदाहि मे ॥ ५२ ॥

परावृत्तिगतं केन निराभासगतं कथम् ।
प्रत्येकजिनपुत्राणां श्रावकाणां वदाहि मे ॥ ५३ ॥

अभिज्ञा लौकिकाः केन भवेल्लोकोत्तरा कथम् ।
चित्तं हि भूमयः सप्त कथं केन वदाहि मे ॥ ५४ ॥

संघस्ते स्यात्कतिविधः संघभेदः कथं भवेत् ।
चिकित्साशास्त्रं सत्त्वानां कथं केन वदाहि मे ॥ ५५ ॥

काश्यपः क्रकुछन्दश्च कोनाकमुनिरप्यहम् । N 29
भाषसे जिनपुत्राणां वद कस्मान्महामुने ॥ ५६ ॥

[1]असत्यात्मकथा केन नित्यनाशकथा कथम्।
कस्मात्तत्त्वं न सर्वत्र चित्तमात्रं प्रभाषसे ॥ ५७ ॥
नरनारीवनं केन हरीतक्यामलीवनम्।
कैलासश्चक्रवालश्च वज्रसंहनना कथम् ॥ ५८ ॥
अचलास्तदन्तरे वै के नानारत्नोपशोभिताः।
ऋषिगन्धर्वसंकीर्णाः कथं केन वदाहि मे ॥ ५९ ॥
इदं श्रुत्वा महावीरो बुद्धो लोकविदां वरः।
महायानमयं चित्तं बुद्धानां हृदयं वलम् ॥ ६० ॥

साधु साधु महाप्रज्ञ महामते निबोधसे।
भाषिष्याम्यनुपूर्वेण यत्त्वया परिपृच्छितम् ॥ ६१ ॥
उत्पादमथ नोत्पादं निर्वाणं शून्यलक्षणम्।
संक्रान्तिमस्वभावत्वं बुद्धाः पारमितासुताः ॥ ६२ ॥
श्रावका जिनपुत्राश्च तीर्थ्या ह्यारूप्यचारिणः।
मेरुसमुद्रा ह्यचला द्वीपा क्षेत्राणि मेदिनी ॥ ६३ ॥
नक्षत्रा भास्करः सोमस्तीर्थ्या देवासुरास्तथा।
N 30 विमोक्षा वशिताभिज्ञा वला ध्याना समाधयः ॥ ६४ ॥

निरोधा ऋद्धिपादाश्च बोध्यङ्गा मार्ग एव च।
ध्यानानि चाप्रमाणानि स्कन्धा गत्यागतानि च ॥ ६५ ॥
समापत्तिर्निरोधाश्च व्युत्थानं चित्तदेशना।
चित्तं मनश्च विज्ञानं नैरात्म्यं धर्मपञ्चकम् ॥ ६६ ॥
स्वभावः कल्पना कल्प्यं दृश्यं दृष्टिद्वयं कथम्।
यानाकराणि गोत्राणि सुवर्णमणिमुक्तिजाः ॥ ६७ ॥
इच्छन्तिका महाभूता भ्रमरा एकबुद्धता।
ज्ञानं ज्ञेयो गमं प्राप्तिः सत्त्वानां च भवाभवम् ॥ ६८ ॥
हया गजा मृगाः केन ग्रहणं ब्रूहि मे कथम्।
दृष्टान्तहेतुभिर्युक्तः सिद्धान्तो देशना कथम् ॥ ६९ ॥

कार्यं च कारणं केन नानाभ्रान्तिस्तथा नयम्।
चित्तमात्रं न दृश्योऽस्ति भूमीनां नास्ति वै क्रमः ॥ ७० ॥
निराभासपरावृत्तिशतं केन ब्रवीषि मे।
चिकित्सशास्त्रं शिल्पाश्च कलाविद्यागमं तथा ॥ ७१ ॥

[1] N असत्त्वात्मकथा.

अचलानां तथा मेरोः प्रमाणं हि क्षितेः कथम् ।
उदधेश्चन्द्रसूर्याणां प्रमाणं ब्रूहि मे कथम् ॥ ७२ ॥

सत्त्वदेहे कति रजांसि हीनोत्कृष्टमध्यमाः । N 31
क्षेत्रे क्षेत्रे रजाः कृत्तो धन्वो धन्वे भवेत्कति ॥ ७३ ॥

हस्ते धनुःक्रमे क्रोशे योजने ह्यर्धयोजने ।
शशवातायनं लिक्षा एडकं हि यवाः कति ॥ ७४ ॥

प्रस्थे हि स्याद्यवाः क्यन्तः प्रस्थार्धे च यवाः कति ।
द्रोणे खार्यां तथा लक्षाः कोट्यो वै बिंबराः कति ॥ ७५ ॥

सर्षपे ह्यणवः क्यन्तो रक्षिका सर्षपाः कति ।
कतिरक्षिको भवेन्माषो धरणं माषकाः कति ॥ ७६ ॥

कर्षो हि धरणाः क्यन्तः पलं वै कति कार्षिका ।
एतेन पिण्डलक्षणं मेरुः कतिपलो भवेत् ।
एवं हि पृच्छ मां पुत्र अन्यथा किं नु पृच्छसि ॥ ७७ ॥

प्रत्येकश्रावकाणां हि बुद्धानां च जिनौरसाम् ।
कल्पणुको भवेत्कायः किं नु एवं न पृच्छसि ॥ ७८ ॥ N 32

वह्नेः शिखा कल्पणुका पवने ह्यणवः कति ।
इन्द्रिये इन्द्रिये क्यन्तो रोमकूपे भ्रुवोः कति ॥ ७९ ॥

धनेश्वरा नराः केन राजानश्चक्रवर्तिनः ।
राज्यं च तैः[1] कथं रक्ष्यं मोक्षश्चैषां कथं भवेत् ॥ ८० ॥

गद्यं पद्यं कथं ब्रूषे मैथुनं लोकविश्रुता ।
अन्नपानस्य वैचित्र्यं नरनारिवनाः कथम् ॥ ८१ ॥

वज्रसंहननाः केन ह्यचला ब्रूहि मे कथम् ।
मायास्वप्ननिभाः केन मृगतृष्णोपमाः कथम् ॥ ८२ ॥

घनानां संभवः कुत्र ऋतूनां च कुतो भवेत् ।
रसानां रसता कस्मात्कस्मात्स्त्रीपुंनपुंसकम् ॥ ८३ ॥

शोभाश्च जिनपुत्राश्च कुत्र मे पृच्छ मां सुत ।
कथं हि अचला दिव्या ऋषिगन्धर्वमण्डिताः ॥ ८४ ॥

मुक्तस्य गमनं कुत्र बद्धः कः केन मुच्यते ।
ध्यायिनां विषयः कोऽसौ निर्माणस्तीर्थकानि च ॥ ८५ ॥

---

१ N नैष्कथं for तैः कथं which is supported by T.

असत्सदक्रिया केन कथं दृश्यं निवर्तते ।
N 33 कथं हि शुध्यते तर्कः केन तर्कः प्रवर्तते ॥ ८६ ॥
क्रिया प्रवर्तते केन गमनं ब्रूहि मे कथम् ।
संज्ञायाश्छेदनं केन समाधिः केन चोच्यते ॥ ८७ ॥
विदार्य त्रिभवं कोऽसौ किं स्थानं का तनुर्भवेत् ।
असत्यात्मकथा केन संवृत्या देशना कथम् ॥ ८८ ॥

लक्षणं पृच्छसे केन नैरात्म्यं पृच्छसे कथम् ।
गर्भा नैयायिकाः केन पृच्छसे मां जिनौरसाः ॥ ८९ ॥

शाश्वतोच्छेददृष्टिश्च केन चित्तं समाध्यते ।
अभिलापस्तथा ज्ञानं शीलं गोत्रं जिनौरसाः ॥ ९० ॥
युक्तव्याख्या गुरुशिष्यः सत्त्वानां चित्रता कथम् ।
अन्नपानं नभो मेघा माराः प्रज्ञप्तिमात्रकम् ॥ ९१ ॥
तरुवल्ल्यः कथं केन पृच्छसे मां जिनौरस ।
क्षेत्राणि चित्रता केन ऋषिर्दीर्घतपास्तथा ॥ ९२ ॥
वंशः कस्ते गुरुः केन पृच्छसे मां जिनौरस ।
उहोडिमा नरा योगे कामधातौ न बुध्यसे ॥ ९३ ॥

सिद्धान्तो ह्यकनिष्ठेषु युक्तिं पृच्छसि मे कथम् ।
N 34 अभिज्ञां लौकिकां केन कथं भिक्षुत्वमेव च ॥ ९४ ॥
नैर्माणिकान् विपाकस्थान् बुद्धान् पृच्छसि मे कथम् ।
तथताज्ञानबुद्धा वै संघाश्चैव कथं भवेत् ॥ ९५ ॥
वीणापणवपुष्पाभाः क्षेत्रा लोकविवर्जिताः ।
चित्तं हि भूमयः सप्त पृच्छसे मां जिनौरस ।
एतांश्चान्यांश्च सुबहून् प्रश्नान् पृच्छसि मां सुत ॥ ९६ ॥
एकैकं लक्षणैर्युक्तं दृष्टिदोषविवर्जितम् ।
सिद्धान्तं देशनां वक्ष्ये सहसा त्वं शृणोहि मे ॥ ९७ ॥
उपन्यासं करिष्यामि पदानां शृणु मे सुत ।
अष्टोत्तरं पदशतं यथा बुद्धानुवर्णितम् ॥ ९८ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—कतमद्भगवन् अष्टोत्तरपदशतम्? भगवानाह—उत्पादपदम् अनुत्पादपदम्, नित्यपदम् अनित्यपदम्, लक्षणपदम् अलक्षणपदम्, स्थित्यन्यथात्वपदम् अस्थित्यन्यथात्वपदम्, क्षणिकपदम् अक्षणिकपदम्, स्वभावपदम् अस्वभावपदम्, शून्यतापदम् अशून्यतापदम्, उच्छेदपदम् अनुच्छेदपदम्, चित्तपदम् अचित्तपदम्, मध्यमपदम् अमध्यमपदम्, शाश्वतपदम् अशाश्वतपदम्,

प्रत्ययपदम् अप्रत्ययपदम्, हेतुपदम् अहेतुपदम्, क्लेशपदम् अक्लेशपदम्, तृष्णापदम् N 35 अतृष्णापदम्, उपायपदम् अनुपायपदम्, कौशल्यपदम् अकौशल्यपदम्, शुद्धिपदम् अशुद्धिपदम्, युक्तिपदम् अयुक्तिपदम्, दृष्टान्तपदम् अदृष्टान्तपदम्, शिष्यपदम् अशिष्यपदम्, गुरुपदम् अगुरुपदम्, गोत्रपदम् अगोत्रपदम्, यानत्रयपदम् अयानत्रयपदम्, निराभासपदम् अनिराभासपदम्, प्रणिधानपदम् अप्रणिधानपदम्, त्रिमण्डलपदम्, अत्रिमण्डलपदम्, निमित्तपदम् अनिमित्तपदम्, सदसत्पक्षपदम् असदसत्पक्षपदम्, उभयपदम् अनुभयपदम्, स्वप्रत्यात्मार्यज्ञानपदम् अस्वप्रत्यात्मार्यज्ञानपदम्, दृष्टधर्मसुखपदम् अदृष्टधर्मसुखपदम्, क्षेत्रपदम् अक्षेत्रपदम्, अणुपदम् अनणुपदम्, जलपदम् अजलपदम्, धन्वपदम् अधन्वपदम्, भूतपदम् अभूतपदम्, संख्यागणितपदम् असंख्यागणितपदम्, अभिज्ञापदम् अनभिज्ञापदम्, खेदपदम् अखेदपदम्, घनपदम् अघनपदम्, शिल्पकलाविद्यापदम् अशिल्पकलाविद्यापदम्, वायुपदम् अवायुपदम्, भूमिपदम् अभूमिपदम्, चिन्त्यपदम् अचिन्त्यपदम्, प्रज्ञप्तिपदम् अप्रज्ञप्तिपदम्, स्वभावपदम् अस्वभावपदम्, स्कन्धपदम् अस्कन्धपदम्, सत्त्वपदम् असत्त्वपदम्, बुद्धिपदम् अबुद्धिपदम्, निर्वाणपदम् अनिर्वाणपदम्, ज्ञेयपदम् अज्ञेयपदम्, तीर्थ्यपदम् अतीर्थ्यपदम्, डमरपदम् अडमरपदम्, मायापदम् अमायापदम्, स्वप्नपदम् अस्वप्नपदम्, मरीचिपदम् अमरीचिपदम्, बिम्बपदम् अबिम्बपदम्, चक्रपदम् अचक्रपदम्, N 36 गन्धर्वपदम् अगन्धर्वपदम्, देवपदम् अदेवपदम्, अन्नपानपदम् अनन्नपानपदम्, मैथुनपदम् अमैथुनपदम्, दृष्टपदम् अदृष्टपदम्, पारमितापदम् अपारमितापदम्, शीलपदम् अशीलपदम्, सोमभास्करनक्षत्रपदम् असोमभास्करनक्षत्रपदम्, सत्यपदम् असत्यपदम्, फलपदम् अफलपदम्, निरोधपदम् अनिरोधपदम्, निरोधव्युत्थानपदम् अनिरोधव्युत्थानपदम्, चिकित्सापदम् अचिकित्सापदम्, लक्षणपदम् अलक्षणपदम्, अङ्गपदम् अनङ्गपदम्, कलाविद्यापदम् अकलाविद्यापदम्, ध्यानपदम् अध्यानपदम्, भ्रान्तिपदम् अभ्रान्तिपदम्, दृश्यपदम् अदृश्यपदम्, रक्ष्यपदम् अरक्ष्यपदम्, वंशपदम् अवंशपदम्, ऋषिपदम् अनर्षिपदम्, राज्यपदम् अराज्यपदम्, ग्रहणपदम् अग्रहणपदम्, रत्नपदम् अरत्नपदम्, व्याकरणपदम् अव्याकरणपदम्, इच्छन्तिकपदम् अनिच्छन्तिकपदम्, स्त्रीपुंनपुंसकपदम् अस्त्रीपुंनपुंसकपदम्, रसपदम् अरसपदम्, क्रियापदम् अक्रियापदम्, देहपदम् अदेहपदम्, तर्कपदम् अतर्कपदम्, चलपदम् अचलपदम्, इन्द्रियपदम् अनिन्द्रियपदम्, संस्कृतपदम् असंस्कृतपदम्, हेतुफलपदम् अहेतुफलपदम्, कनिष्ठपदम् अकनिष्ठपदम्, ऋतुपदम् अनृतुपदम्, द्रुमगुल्मलतावितानपदम् अद्रुमगुल्मलतावितानपदम्, वैचित्र्यपदम् N 37 अवैचित्र्यपदम्, देशनावतारपदम् अदेशनावतारपदम्, विनयपदम् अविनयपदम्, भिक्षुपदम् अभिक्षुपदम्, अधिष्ठानपदम् अनधिष्ठानपदम्, अक्षरपदम् अनक्षरपदम्।

इदं तन्महामते अष्टोत्तरं पदशतं पूर्वबुद्धानुवर्णितम्॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्--कतिविधो भगवन् विज्ञानानामुत्पादस्थितिनिरोधो भवति? भगवानाह--द्विविधो महामते विज्ञानानामुत्पत्तिस्थितिनिरोधो भवति, न च तार्किका अवबुध्यन्ते यदुत प्रबन्धनिरोधो लक्षणनिरोधश्च। द्विविध उत्पादो विज्ञानानाम्, प्रबन्धोत्पादो लक्षणोत्पादश्च। द्विविधा स्थितिः प्रबन्धस्थितिर्लक्षणस्थितिश्च। त्रिविधं विज्ञानं प्रवृत्तिलक्षणं कर्मलक्षणं जातिलक्षणं च। द्विविधं महामते विज्ञानं संक्षेपेण अष्टलक्षणोक्तं ख्यातिविज्ञानं वस्तुप्रतिविकल्पविज्ञानं च। यथा महामते दर्पणस्य रूपग्रहणम्, एवं ख्यातिविज्ञानस्याख्यास्यति। ख्यातिविज्ञानं च महामते वस्तुप्रतिविकल्पविज्ञानं च। द्वेऽप्येतेऽभिन्नलक्षणेऽन्योन्यहेतुके। तत्र ख्याति-
N 38 विज्ञानं महामते अचिन्त्यवासनापरिणामहेतुकम्। वस्तुप्रतिविकल्पविज्ञानं च महामते विषयविकल्पहेतुकमनादिकालप्रपञ्चवासनाहेतुकं च॥

तत्र सर्वेन्द्रियविज्ञाननिरोधो महामते यदुत आलयविज्ञानस्य अभूतपरिकल्पवासनावैचित्र्यनिरोधः। एष हि महामते लक्षणनिरोधः। प्रबन्धनिरोधः पुनर्महामते यस्माच्च प्रवर्तते। यस्मादिति महामते यदाश्रयेण यदालम्बनेन च। तत्र यदाश्रयमनादिकालप्रपञ्चदौष्ठुल्यवासना यदालम्बनं स्वचित्तदृश्यविज्ञानविषये विकल्पाः। तद्यथा महामते मृत्परमाणुभ्यो मृत्पिण्डः, न चान्यो नानन्यः, तथा सुवर्णं भूषणात्। यदि च महामते मृत्पिण्डो मृत्परमाणुभ्योऽन्यः स्यात्, तैर्नारब्धः स्यात्। स चारब्धस्तैर्मृत्परमाणुभिः, तस्मान्नान्यः। अथानन्यः स्यात्, मृत्पिण्डपरमाण्वोः प्रतिभागो न स्यात्। एवमेव महामते प्रवृत्तिविज्ञानान्यालयविज्ञानजातिलक्षणादन्यानि स्युः, अनालयविज्ञानहेतुकानि स्युः। अथानन्यानि प्रवृत्तिविज्ञाननिरोधे आलयविज्ञानविरोधः स्यात्, स च न भवति स्वजातिलक्षणनिरोधः। तस्मान्महामते न स्वजातिलक्षणनिरोधो विज्ञानानां किं तु कर्मलक्षणनिरोधः। स्वजातिलक्षणे पुनर्निरुध्यमाने आलयविज्ञाननिरोधः स्यात्। आलयविज्ञाने पुनर्निरुध्यमाने[1] निर्विशिष्ट-
N 39 स्तीर्थकरोच्छेदवादेनायं वादः स्यात्। तीर्थकराणां महामते अयं वादो यदुत विषयग्रहणोपरमाद्विज्ञानप्रबन्धोपरमो भवति। विज्ञानप्रबन्धोपरमादनादिकालप्रबन्धव्युच्छित्तिः स्यात्। कारणतश्च महामते तीर्थकराः प्रबन्धप्रवृत्तिं वर्णयन्ति। न चक्षुर्विज्ञानस्य रूपालोकसमुदयत उत्पत्तिं वर्णयन्ति अन्यत्र कारणतः। कारणं पुनर्महामते प्रधानपुरुषेश्वरकालाणुप्रवादाः॥

पुनरपरं महामते सप्तविधो भावस्वभावो भवति यदुत समुदयस्वभावो भावस्वभावो लक्षणस्वभावो महाभूतस्वभावो हेतुस्वभावः प्रत्ययस्वभावो निष्पत्तिस्वभावश्च सप्तमः॥

पुनरपरं महामते सप्तविधः परमार्थो यदुत चित्तगोचरो ज्ञानगोचरः प्रज्ञागोचरो दृष्टिद्वयगोचरो दृष्टिद्वयातिक्रान्तगोचरः सुतभूम्यनुक्रमणगोचरस्तथागतस्य प्रत्यात्मगतिगोचरः॥

---

१ N निरुप्यमाणे for निरुध्यमाने which is supported by T.

एतन्महामते अतीतानागतप्रत्युत्पन्नानां तथागतानामर्हतां सम्यक्संबुद्धानां भाव- N 40
स्वभावपरमार्थहृदयं येन समन्वागतास्तथागता लौकिकलोकोत्तरतमान् धर्मानार्येण प्रज्ञा-
चक्षुषा स्वसामान्यलक्षणपतितान् व्यवस्थापयन्ति । तथा च व्यवस्थापयन्ति यथा तीर्थ-
करवादकुदृष्टिसाधारणा न भवन्ति । कथं च महामते तीर्थकरवादकुदृष्टिसाधारणा भवन्ति ?
यदुत स्वचित्तविषयविकल्पदृष्ट्यनवबोधनाद्विज्ञानानाम् । स्वचित्तदृश्यमात्रानवतारेण महामते
बालपृथग्जना भावाभावस्वभावपरमार्थदृष्टिद्वयवादिनो भवन्ति ॥

पुनरपरं महामते विकल्पभवत्रयदुःखविनिवर्तनमज्ञानतृष्णाकर्मप्रत्ययविनिवृत्तिं
स्वचित्तदृश्यमायाविषयानुदर्शनं भाषिष्ये । ये केचिन्महामते श्रमणा वा ब्राह्मणा वा अभूत्वा
श्रद्धाहेतुफलाभिव्यक्तिद्रव्यं च कालावस्थितं प्रत्ययेषु च स्कन्धधात्वायतनानामुत्पादस्थितिं
चेच्छन्ति, भूत्वा च व्ययम्, ते महामते संततिक्रियोत्पादभङ्गभवनिर्वाणमार्गकर्मफलसत्य-
विनाशोच्छेदवादिनो भवन्ति । तत्कस्य हेतोः ? यदिदं प्रत्यक्षानुपलब्धेराद्यदर्शनाभावात् । N 41
तद्यथा महामते घटकपालाभावो घटकृत्यं न करोति, नापि दग्धबीजमङ्कुरकृत्यं करोति,
एवमेव महामते ये स्कन्धधात्वायतनभावा निरुद्धा निरुध्यन्ते निरोत्स्यन्ते, स्वचित्तदृश्य-
विकल्पदर्शनाहेतुत्वान्नास्ति नैरन्तर्यप्रवृत्तिः ॥

यदि पुनर्महामते अभूत्वा श्रद्धाविज्ञानानां त्रिसंगतिप्रत्ययक्रियायोगेनोत्पत्तिरभवि-
ष्यत्, असतामपि महामते कूर्मरोम्णामुत्पत्तिरभविष्यत्, सिकताभ्यो वा तैलस्य । प्रतिज्ञा-
हानिर्नियमनिरोधश्च महामते प्रसज्यते, क्रियाकर्मकरणवैयर्थ्यं च सदसतो ब्रुवतः । तेषामपि
महामते त्रिसंगतिप्रत्ययक्रियायोगेनोपदेशो विद्यते हेतुफलस्वलक्षणतया अतीतानागतप्रत्यु-
त्पन्नासत्सल्लक्षणास्तितां युक्त्यागमैस्तर्कभूमौ वर्तमानाः स्वदृष्टिदोषवासनतया निर्देक्ष्यन्ति ।
एवमेव महामते बालपृथग्जनाः कुदृष्टिदष्टा विषममतयोऽज्ञैः प्रणीतं सर्वप्रणीतमिति वक्ष्यन्ति ॥

ये पुनरन्ये महामते श्रमणा वा ब्राह्मणा वा निःस्वभावघनालातचक्रगन्धर्वनगरा- N 42
नुत्पादमायामरीच्युदकचन्द्रस्वप्नस्वभावबाह्यचित्तदृश्यविकल्पानादिकालप्रपञ्चदर्शनेन स्वचित्त-
विकल्पप्रत्ययविनिवृत्तिरहिताः परिकल्पिताभिधानलक्ष्यलक्षणाभिधेयरहिता देहभोगप्रतिष्ठा-
समालयविज्ञानविषयग्राह्यग्राहकविसंयुक्तं निराभासगोचरमुत्पादस्थितिभङ्गवर्ज्यं स्वचित्तो-
त्पादानुगतं विभावयिष्यन्ति, नचिरात्ते महामते बोधिसत्त्वा महासत्त्वाः संसारनिर्वाण-
समताप्राप्ता भविष्यन्ति । महाकरुणोपायकौशल्यानाभोगगतेन महामते प्रयोगेन सर्वसत्त्वमाया-
प्रतिबिम्बसमतया अनारब्धप्रत्ययतया अध्यात्मबाह्यविषयविमुक्ततया चित्तबाह्यादर्शनतया
अनिमित्ताधिष्ठानानुगता अनुपूर्वेण भूमिक्रमसमाधिविषयानुगमनतया त्रैधातुकस्वचित्ततया
अधिमुक्तितः प्रतिविभावयमाना मायोपमसमाधिं प्रतिलभन्ते । स्वचित्तनिराभासमात्रावतारेण
प्रज्ञापारमिताविहारानुप्राप्ता उत्पादक्रियायोगविरहिताः समाधिवज्रबिम्बोपमं तथागतकायानु-
गतं तथतानिर्माणानुगतं बलाभिज्ञावशिताकृपाकरुणोपायमण्डितं सर्वबुद्धक्षेत्रतीर्थ्यायतनोपगतं N 43
चित्तमनोमनोविज्ञानरहितं परावृत्त्यानुश्रयानुपूर्वकं तथागतकायं महामते ते बोधिसत्त्वाः

प्रतिलप्स्यन्ते । तस्मात्तर्हि महामते बोधिसत्त्वैर्महासत्त्वैस्तथागतकायानुगमेन प्रतिलाभिना स्कन्धधात्वायतनचित्तहेतुप्रत्ययक्रियायोगोत्पादस्थितिभङ्गविकल्पप्रपञ्चरहितैर्भवितव्यं चित्तमात्रानुसारिभिः ॥

अनादिकालप्रपञ्चदौष्ठुल्यविकल्पवासनहेतुकं त्रिभवं पश्यतो निराभासबुद्धभूम्यनुत्पादस्मरणतया प्रत्यात्मार्यधर्मगतिंगतः स्वचित्तवशवर्ती अनाभोगचर्यागतिंगतो विश्वरूपमणिसदृशः सूक्ष्मैः सत्त्वचित्तानुप्रवेशकैर्निर्माणविग्रहैश्चित्तमात्रावधारणतया भूमिक्रमानुसंधौ प्रतिष्ठापयति । तस्मात्तर्हि महामते बोधिसत्त्वेन महासत्त्वेन स्वसिद्धान्तकुशलेन भवितव्यम् ॥

पुनरपि महामतिराह—देशयतु मे भगवान् चित्तमनोमनोविज्ञानपञ्चधर्मस्वभावलक्षणकुसुमधर्मपर्यायं बुद्धबोधिसत्त्वानुयातं स्वचित्तदृश्यगोचरविसंयोजनं सर्वभाष्ययुक्तितत्त्व-
N 44 लक्षणविदारणं सर्वबुद्धप्रवचनहृदयं लङ्कापुरिगिरिमलये निवासिनो बोधिसत्त्वानारभ्योदधितरंगालयविज्ञानगोचरं धर्मकायं तथागतानुगीतं प्रभाषस्व ॥

अथ खलु भगवान् पुनरेव महामतिं बोधिसत्त्वं महासत्त्वमेतदवोचत्—चतुर्भिर्महामते कारणैश्चक्षुर्विज्ञानं प्रवर्तते । कतमैश्चतुर्भिः ? यदुत स्वचित्तदृश्यग्रहणानवबोधतोऽनादिकालप्रपञ्चदौष्ठुल्यरूपवासनाभिनिवेशतो विज्ञानप्रकृतिस्वभावतो विचित्ररूपलक्षणकौतूहलतः । एभिर्महामते चतुर्भिः कारणैरोघान्तरजलस्थानीयादालयविज्ञानात्प्रवृत्तिविज्ञानतरंग उत्पद्यते । यथा महामते चक्षुर्विज्ञाने, एवं सर्वेन्द्रियपरमाणुरोमकूपेषु युगपत्प्रवृत्तिक्रमविषयादर्शबिम्बदर्शनवत् उदधेः पवनाहता इव महामते विषयपवनचित्तोदधितरंगा अव्युच्छिन्नहेतुक्रियालक्षणा अन्योन्यविनिर्मुक्ताः कर्मजातिलक्षणसुविनिबद्धरूपस्वभावानवधारिणो महामते पञ्च विज्ञानकायाः प्रवर्तन्ते । सह तैरेव महामते पञ्चभिर्विज्ञानकायैर्हेतुविषयपरिच्छेदलक्षणावधारकं नाम मनोविज्ञानं तद्धेतुजशरीरं प्रवर्तते । न च तेषां तस्य चैवं भवति—वयमत्रान्योन्यहेतुकाः स्वचित्तदृश्यविकल्पाभिनिवेशप्रवृत्ता इति ॥

N 45 अथ च अन्योन्याभिन्नलक्षणसहिताः प्रवर्तन्ते विज्ञप्तिविषयपरिच्छेदे । तथा च प्रवर्तमानाः प्रवर्तन्ते यथा समापन्नस्यापि योगिनः सूक्ष्मगतिवासनाप्रवृत्ता न प्रज्ञायन्ते । योगिनां चैवं भवति—निरोध्य विज्ञानानि समापत्स्यामहे इति । ते चानिरुद्धैरेव विज्ञानैः समापद्यन्ते वासनाबीजानिरोधादनिरुद्धाः, विषयप्रवृत्तग्रहणवैकल्यान्निरुद्धाः । एवं सूक्ष्मो महामते आलयविज्ञानगतिप्रचारो यत्तथागतं स्थापयित्वा भूमिप्रतिष्ठितांश्च बोधिसत्त्वान्, न सुकरमन्यैः श्रावकप्रत्येकबुद्धतीर्थ्ययोगयोगिभिरधिगन्तुं समाधिप्रज्ञाबलाधानतोऽपि वा परिच्छेत्तुम् । अन्यत्र भूमिलक्षणप्रज्ञाज्ञानकौशलपदप्रभेदविनिश्चयजिनानन्तकुशलमूलोपचयस्वचित्तदृश्यविकल्पप्रपञ्चविरहितैर्वनगहनगुहालयान्तर्गतैर्महामते हीनोत्कृष्टमध्यमयोगयोगिभिर्न शक्यं स्वचित्तविकल्पदृश्यधाराद्रष्टूनन्तक्षेत्रजिनाभिषेकवशिताबलाभिज्ञासमाधयः

प्राप्तुम् । कल्याणमित्रजिनपुरस्कृतैर्महामते शक्यं चित्तमनोविज्ञानं स्वचित्तदृश्यस्वभाव-
गोचरविकल्पसंसारभवोदधिं कर्मतृष्णाज्ञानहेतुकं तर्तुम् । अत एतस्मात्कारणान्महामते योगिना N 46
कल्याणमित्रजिनयोगे योगः प्रारब्धव्यः ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

तरंगा ह्युदधेर्यद्वत्पवनप्रत्ययेरिताः ।
नृत्यमानाः प्रवर्तन्ते व्युच्छेदश्च न विद्यते ॥ ९९ ॥
आलयौघस्तथा नित्यं विषयपवनेरितः ।
चित्रैस्तरंगविज्ञानैर्नृत्यमानः प्रवर्तते ॥ १०० ॥
नीले रक्तेऽथ लवणे शङ्खे क्षीरे च शार्करे ।
कषायैः फलपुष्पाद्यैः किरणा यथ भास्करे ॥ १०१ ॥
न चान्येन च नानन्येन तरंगा ह्युदधेर्मताः ।
विज्ञानानि तथा सप्त चित्तेन सह संयुताः ॥ १०२ ॥
उदधेः परिणामोऽसौ तरंगाणां विचित्रता ।
आलयं हि तथा चित्रं विज्ञानाख्यं प्रवर्तते ॥ १०३ ॥
चित्तं मनश्च विज्ञानं लक्षणार्थं प्रकल्प्यते ।
अभिन्नलक्षणा ह्यष्टौ न लक्ष्या न च लक्षणम् ॥ १०४ ॥
उदधेश्च तरंगाणां यथा नास्ति विशेषणम् ।
विज्ञानानां तथा चित्तैः परिणामो न लभ्यते ॥ १०५ ॥
चित्तेन चीयते कर्म मनसा च विचीयते ।
विज्ञानेन विजानाति दृश्यं कल्पेति पञ्चभिः ॥ १०६ ॥
नीलरक्तप्रकारं हि विज्ञानं ख्यायते नृणाम् । N 47
तरंगचित्तसाधर्म्यं वद कस्मान्महामते ॥ १०७ ॥
नीलरक्तप्रकारं हि तरंगेषु न विद्यते ।
वृत्तिश्च वर्ण्यते चित्तं लक्षणार्थं हि बालिशान् ॥ १०८ ॥
न तस्य विद्यते वृत्तिः स्वचित्तं ग्राह्यवर्जितम् ।
ग्राह्ये सति हि वै ग्राहस्तरंगैः सह साध्यते ॥ १०९ ॥
देहभोगप्रतिष्ठानं विज्ञानं ख्यायते नृणाम् ।
तेनास्य दृश्यते वृत्तिस्तरंगैः सह सादृशा ॥ ११० ॥
उदधिस्तरंगभावेन नृत्यमानो विभाव्यते ।
आलयस्य तथा वृत्तिः कस्माद्बुद्ध्या न गम्यते ॥ १११ ॥
बालानां बुद्धिवैकल्यादालयं ह्युदधिर्यथा ।
तरंगवृत्तिसाधर्म्यं दृष्टान्तेनोपनीयते ॥ ११२ ॥

उदेति भास्करो यद्वत्समहीनोत्तमे जिने ।
तथा त्वं लोकप्रद्योत तत्त्वं देशेसि बालिशान् ॥ ११३ ॥

N 48 कृत्वा धर्मेष्ववस्थानं कस्मात्तत्त्वं न भाषसे ।
भाषसे यदि वा तत्त्वं चित्ते तत्त्वं न विद्यते ॥ ११४ ॥

उदधेर्यथा तरंगा हि दर्पणे सुपिने यथा ।
दृश्यन्ति युगपत्काले तथा चित्तं स्वगोचरे ॥ ११५ ॥

वैकल्याद्विषयाणां हि क्रमवृत्त्या प्रवर्तते ।
विज्ञानेन विजानाति मनसा मन्यते पुनः ॥ ११६ ॥

पञ्चानां ख्यायते दृश्यं क्रमो नास्ति समाहिते ।
चित्राचार्यो यथा कश्चिच्चित्रान्तेवासिकोऽपि वा ।
चित्रार्थे नामयेद्रङ्गान् देशयामि तथा ह्यहम् ॥ ११७ ॥

रङ्गे न विद्यते चित्रं न भूमौ न च भाजने ।
सत्त्वानां कर्षणार्थाय रङ्गैश्चित्रं विकल्प्यते ।
देशना व्यभिचारं च तत्त्वं ह्यक्षरवर्जितम् ॥ ११८ ॥

N 49 कृत्वा धर्मेष्ववस्थानं तत्त्वं देशेमि योगिनाम् ।
तत्त्वं प्रत्यात्मगतिकं कल्प्यकल्पेन वर्जितम् ।
देशेमि जिनपुत्राणां नेयं बालान देशना ॥ ११९ ॥

विचित्रा हि यथा माया दृश्यते न च विद्यते ।
देशनापि तथा चित्रा देश्यतेऽव्यभिचारिणी ।
देशना हि यदन्यस्य तदन्यस्याप्यदेशना ॥ १२० ॥

आतुरे आतुरे यद्वद्भिषग्द्रव्यं प्रयच्छति ।
बुद्धा हि तद्वत्सत्त्वानां चित्तमात्रं वदन्ति वै ॥ १२१ ॥

तार्किकाणामविषयं श्रावकाणां न चैव हि ।
यं देशयन्ति वै नाथाः प्रत्यात्मगतिगोचरम् ॥ १२२ ॥

पुनरपरं महामते बोधिसत्त्वेन स्वचित्तदृश्यग्राह्यग्राहकविकल्पगोचरं परिज्ञातुकामेन संगणिकासंसर्गमिद्धनिवरणविगतेन भवितव्यम् । प्रथममध्यमपश्चाद्रात्रजागरिकायोगमनुयुक्तेन भवितव्यम् । कुतीर्थ्यशास्त्राख्यायिकाश्रावकप्रत्येकबुद्धयानलक्षणविरहितेन च भवितव्यम् । स्वचित्तदृश्यविकल्पलक्षणगतिंगतेन च भवितव्यं बोधिसत्त्वेन महासत्त्वेन ॥

पुनरपरं महामते बोधिसत्त्वेन महासत्त्वेन चित्तविज्ञानप्रज्ञालक्षणव्यवस्थायां स्थित्वा उपरिष्टादार्यज्ञानलक्षणत्रययोगः करणीयः । तत्रोपरिष्टादार्यज्ञानलक्षणत्रयं महामते कतमत् ? यदुत निराभासलक्षणं सर्वबुद्धस्वप्रणिधानाधिष्ठानलक्षणं प्रत्यात्मार्यज्ञानगतिलक्षणं

च । यान्यधिगम्य योगी खञ्जगर्दभ इव चित्तप्रज्ञाज्ञानलक्षणं हित्वा जिनसुताष्टमीं प्राप्य N 50 भूमिं तदुत्तरे लक्षणत्रये योगमापद्यते ॥

तत्र निराभासलक्षणं पुनर्महामते सर्वश्रावकप्रत्येकबुद्धतीर्थलक्षणपरिचयात्प्रवर्तते । अधिष्ठानलक्षणं पुनर्महामते पूर्वबुद्धस्वप्रणिधानाधिष्ठानतः प्रवर्तते । प्रत्यात्मार्यज्ञानगतिलक्षणं पुनर्महामते सर्वधर्मलक्षणानभिनिवेशतो मायोपमसमाधिकायप्रतिलम्भाद्बुद्धभूमिगतिगमनप्रचारात् प्रवर्तते । एतन्महामते आर्याणां लक्षणत्रयं येनार्येण लक्षत्रयेण समन्वागता आर्याः स्वप्रत्यात्मार्यज्ञानगतिगोचरमधिगच्छन्ति । तस्मात्तर्हि महामते आर्यज्ञानलक्षणत्रययोगः करणीयः ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरेव तस्या बोधिसत्त्वपर्षदश्चित्ताशयविचारमाज्ञाय आर्यज्ञानवस्तुप्रविचयं नाम धर्मपर्यायं सर्वबुद्धाधिष्ठानाधिष्ठितो भगवन्तं परिपृच्छति स्म - देशयतु मे भगवानार्यज्ञानवस्तुप्रविचयं नाम धर्मपर्यायमष्टोत्तरपदशतप्रभेदाश्रयम्, यमाश्रित्य तथागता अर्हन्तः सम्यक्संबुद्धा बोधिसत्त्वानां महासत्त्वानां N 51 स्वसामान्यलक्षणपतितानां परिकल्पितस्वभावगतिप्रभेदं देशयन्ति, येन परिकल्पितस्वभावगतिप्रभेदेन सुप्रतिविभागविद्धेन पुद्गलधर्मनैरात्म्यप्रचारं प्रतिविशोध्य भूमिषु कृतविद्याः सर्वश्रावकप्रत्येकबुद्धतीर्थकरध्यानसमाधिसमापत्तिसुखमतिक्रम्य तथागताचिन्त्यविषयप्रचारगतिप्रचारं पञ्चधर्मस्वभावगतिविनिवृत्तं तथागतं धर्मकायं प्रज्ञाज्ञानसुनिबद्धधर्मं मायाविषयाभिनिवृत्तं सर्वबुद्धक्षेत्रतुषितभवनाकनिष्ठालयोपगं तथागतकायं प्रतिलभेरन् ॥

भगवानाह—इह महामते एके तीर्थ्यातीर्थ्यदृष्टयो नास्तित्वाभिनिविष्टा विकल्पबुद्धिहेतुक्षयस्वभावाभावान्नास्ति शशस्य विषाणं विकल्पयन्ति । यथा शशविषाणं नास्ति, एवं सर्वधर्माः । अन्ये पुनर्महामते भूतगुणाणुद्रव्यसंस्थानसंनिवेशविशेषं दृष्ट्वा नास्तिशशशृङ्गाभिनिवेशाभिनिविष्टा अस्ति गोशृङ्गमिति कल्पयन्ति । ते महामते अन्तद्वयदृष्टिपतिताश्चित्तमात्रानवधारितमतयः । स्वचित्तधातुविकल्पेन ते पुष्णन्ति । देहभोगप्रतिष्ठागतिविकल्पमात्रे महामते शशशृङ्गं नास्त्यस्तिविनिवृत्तं न कल्पयेत्तथा महामते सर्वभावानां नास्त्यस्तिविनिवृत्तं N 52 न कल्पयितव्यम् ॥

ये पुनर्महामते नास्त्यस्तिविनिवृत्ता नास्ति शशशृङ्गं न कल्पयन्ति, तैरन्योन्यापेक्षहेतुत्वान्नास्ति शशविषाणमिति न कल्पयितव्यम् । आपरमाणुप्रविचयाद्वस्त्वनुपलब्धभावान्महामते आर्यज्ञानगोचरविनिवृत्तमस्ति गोशृङ्गमिति न कल्पयितव्यम् ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—ननु भगवन् विकल्पस्याप्रवृत्तिलक्षणं दृष्ट्वा अनुमिमीमहे विकल्पाप्रवृत्त्यपेक्षं तस्य नास्तित्वम् । भगवानाह—न हि महामते विकल्पाप्रवृत्त्यपेक्षं तस्य नास्तित्वम् । तत्कस्य हेतोः ? विकल्पस्य तत्प्रवृत्तिहेतुत्वात् । तद्विषाणाश्रयप्रवृत्तो हि महामते विकल्पः । यस्माद्विषाणाश्रयप्रवृत्तो महामते विकल्पः, तस्मादाश्रयहेतुत्वादन्यानन्यविवर्जितत्वान्न हि तदपेक्षं नास्तित्वं शशविषाणस्य ।

N 53 यदि पुनर्महामते विकल्पोऽन्यः स्याच्छशविषाणादविषाणहेतुकः स्यात्। अथानन्यः स्यात्,
तद्धेतुकत्वादापरमाणुप्रविचयानुपलब्धेर्विषाणादनन्यत्वात्तदभावः स्यात्। तदुभयभावाभावा-
त्कस्य किमपेक्ष्य नास्तित्वं भवति? अथ न भवति महामते अपेक्ष्य नास्तित्वं शशविषाणस्य
अस्तित्वमपेक्ष्य नास्तित्वं शशविषाणं न कल्पयितव्यं विषमहेतुत्वान्महामते नास्त्यस्तित्वम्
सिद्धिर्न भवति नास्त्यस्तित्ववादिनाम्। अन्ये पुनर्महामते तीर्थकरदृष्टयो रूपकारणसंस्था-
नाभिनिवेशाभिनिविष्टा आकाशभावापरिच्छेदकुशला रूपमाकाशभावविगतं परिच्छेदं दृष्ट्वा
विकल्पयन्ति। आकाशमेव च महामते रूपम्। रूपभूतानुप्रवेशान्महामते रूपमेवाकाशम्।
आधेयाधारव्यवस्थानभावेन महामते रूपाकाशकारणयोः प्रविभागः प्रत्येतव्यः। भूतानि
महामते प्रवर्तमानानि परस्परस्वलक्षणभेदभिन्नानि आकाशे चाप्रतिष्ठितानि। न च
तेष्वाकाशं नास्ति। एवमेव शशस्य विषाणं महामते गोविषाणमपेक्ष्य भवति। गोविषाणं
N 54 पुनर्महामते अणुशो विभज्यमानं पुनरप्यणवो विभज्यमाना अणुत्वलक्षणे नावतिष्ठन्ते।
तस्य किमपेक्ष्य नास्तित्वं भवति? अथान्यदपेक्ष्य वस्तु, तदप्येवंधर्मि॥

अथ खलु भगवान् पुनरपि महामतिं बोधिसत्त्वं महासत्त्वमेतदवोचत्—शशगोशृङ्गाकाशरूपदृष्टिविकल्पविगतेन महामते भवितव्यम्, तदन्यैश्च बोधिसत्त्वैः। स्वचित्तदृश्यविकल्पानुगममनसा च महामते भवितव्यम्। सर्वजिनसुतक्षेत्रमण्डले च त्वया स्वचित्तदृश्ययोगोपदेशः करणीयः॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

दृश्यं न विद्यते चित्तं चित्तं दृश्यात्प्रवर्तते।
देवभोगप्रतिष्ठानमालयं ख्यायते नृणाम्॥ १२३॥

चित्तं मनश्च विज्ञानं स्वभावं धर्मपञ्चकम्।
नैरात्म्यं द्वितयं शुद्धं प्रभाषन्ते विनायकाः॥ १२४॥

दीर्घह्रस्वादिसंबन्धमन्योन्यतः प्रवर्तते।
अस्तित्वसाधकं नास्ति अस्ति नास्तित्वसाधकम्॥ १२५॥

अणुशो भज्यमानं हि नैव रूपं विकल्पयेत्।
चित्तमात्रं व्यवस्थानं कुदृष्ट्या न प्रसीदति॥ १२६॥

तार्किकाणामविषयः श्रावकाणां न चैव हि।
यं देशयन्ति वै नाथाः प्रत्यात्मगतिगोचरम्॥ १२७॥

N 55

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि स्वचित्तदृश्यधाराविशुद्ध्यर्थं भगवन्तमध्येषते स्म—कथं भगवन् स्वचित्तदृश्यधारा विशुध्यति युगपत्क्रमवृत्त्या वा? भगवानाह—क्रमवृत्त्या महामते स्वचित्तदृश्यधारा विशुध्यति न युगपत्। तद्यथा महामते आम्रफलानि क्रमशः पच्यन्ते न युगपत्, एवमेव महामते स्वचित्तदृश्यधारा सत्त्वानां क्रमशो विशुध्यति

न युगपत्। तद्यथा महामते कुम्भकारः क्रमशो भाण्डानि कुरुते न युगपत्, एवमेव महामते तथागतः सत्त्वानां स्वचित्तदृश्यधारां क्रमशो विशोधयति न युगपत्। तद्यथा महामते पृथिव्यां तृणगुल्मौषधिवनस्पतयः क्रमवृत्त्या विरोहन्ति न युगपत्, एवमेव महामते सत्त्वानां तथागतः क्रमशः स्वचित्तदृश्यधारां विशोधयति न युगपत्। तद्यथा महामते हास्यलास्यगीतवादित्रवीणालेख्ययोग्याः क्रमशः प्रवर्तन्ते न युगपत्, एवमेव महामते तथागतः सर्वसत्त्वानां क्रमशः स्वचित्तदृश्यधारां विशोधयति न युगपत्। तद्यथा महामते दर्पणान्तर्गताः सर्वरूपावभासाः संदृश्यन्ते निर्विकल्पा युगपत्, एवमेव महामते स्वचित्तदृश्य- N 56
धारां युगपत्तथागतः सर्वसत्त्वानां विशोधयति निर्विकल्पां निराभासगोचराम्। तद्यथा महामते सोमादित्यमण्डलं युगपत्सर्वरूपावभासान् किरणैः प्रकाशयति, एवमेव महामते तथागतः स्वचित्तदृश्यदौष्ठुल्यवासनाविगतानां सत्त्वानां युगपदचिन्त्यज्ञानजिनगोचरविषयं संदर्शयति। तद्यथा महामते आलयविज्ञानं स्वचित्तदृश्यदेहप्रतिष्ठाभोगविषयं युगपद्विभावयति, एवमेव महामते निष्यन्दबुद्धो युगपत्सत्त्वगोचरं परिपाच्य आकनिष्ठभवनविमानालययोगं योगिनामर्पयति। तद्यथा महामते धर्मताबुद्धो युगपन्निष्यन्दनिर्माणकिरणैर्विराजते, एवमेव महामते प्रत्यात्मार्यगतिधर्मलक्षणं भावाभावकुदृष्टिविनिवर्तनतया युगपद्विराजते॥

पुनरपरं महामते धर्मतानिष्यन्दबुद्धः स्वसामान्यलक्षणपतितात्सर्वधर्मात्स्वचित्तदृश्यवासनाहेतुलक्षणोपनिबद्धात्परिकल्पितस्वभावाभिनिवेशहेतुकानतदात्मकविविधमायारङ्गपुरुषवैचित्र्याभिनिवेशानुपलब्धितो महामते देशयति। पुनरपरं महामते परिकल्पितस्वभाववृत्तिलक्षणं परतन्त्रस्वभावाभिनिवेशतः प्रवर्तते। तद्यथा तृणकाष्ठगुल्मलताश्रयान्मायाविद्यापुरुष- N 57
संयोगात्सर्वसत्त्वरूपधारिणं मायापुरुषविग्रहमभिनिष्पन्नैकसत्त्वशरीरं विविधकल्पविकल्पितं ख्यायते, तथा ख्यायन्नपि महामते तदात्मको न भवति, एवमेव महामते परतन्त्रस्वभावे परिकल्पितस्वभावे विविधविकल्पचित्तविचित्रलक्षणं ख्यायते। वस्तुपरिकल्पलक्षणाभिनिवेशवासनात्परिकल्पयन् महामते परिकल्पितस्वभावलक्षणं भवति। एषा महामते निष्यन्दबुद्धदेशना। धर्मताबुद्धः पुनर्महामते चित्तस्वभावलक्षणविसंयुक्तां प्रत्यात्मार्यगतिगोचरव्यवस्थां करोति। निर्मितनिर्माणबुद्धः पुनर्महामते दानशीलध्यानसमाधिचित्रप्रज्ञाज्ञानस्कन्धधात्वायतनविमोक्षविज्ञानगतिलक्षणप्रभेदप्रचारं व्यवस्थापयति। तीर्थ्यदृष्ट्या च रूप्यसमतिक्रमणलक्षणं देशयति। धर्मताबुद्धः पुनर्महामते निरालम्बः। आलम्बविगतं सर्वक्रियेन्द्रियप्रमाणलक्षणविनिवृत्तमविषयं बालश्रावकप्रत्येकबुद्धतीर्थकरात्मकलक्षणाभिनिवेशाभिनिविष्टानाम्। तस्मात्तर्हि महामते प्रत्यात्मार्यगतिविशेषलक्षणे योगः करणीयः। स्वचित्तलक्षणदृश्यविनि- N 58
वृत्तिदृष्टिना च ते भवितव्यम्॥

पुनरपरं महामते द्विविधं श्रावकयाननयप्रभेदलक्षणं यदुत प्रत्यात्मार्याधिगमविशेषलक्षणं च भावविकल्पस्वभावाभिनिवेशलक्षणं च। तत्र महामते प्रत्यात्मार्याधिगमविशेषलक्षणं श्रावकाणां कतमत्? यदुत शून्यतानात्मदुःखानित्यविषयसत्यवैराग्योपशमात्स्कन्ध-

धात्वायतनस्वसामान्यलक्षणबाह्यार्थविनाशलक्षणाद्यथाभूतपरिज्ञानाच्चित्तं समाधीयते। स्वचित्तं समाधाय ध्यानविमोक्षसमाधिमार्गफलसमापत्तिविमुक्तिवासनाचिन्त्यपरिणतिच्युतिविगतं प्रत्यात्मार्यगतिलक्षणसुखविहारं महामते अधिगच्छन्ति श्रावकाः। एतन्महामते श्रावकाणां प्रत्यात्मार्यगतिलक्षणम्। एतद्धि महामते श्रावकाणां प्रत्यात्मार्याधिगमविहारसुखमधिगम्य बोधिसत्त्वेन महासत्त्वेन निरोधसुखं समापत्तिसुखं च सत्त्वक्रियापेक्षया पूर्वस्वप्रणिधानाभिनिर्हृततया च न साक्षात्करणीयम्। एतन्महामते श्रावकाणां प्रत्यात्मार्यगतिलक्षणसुखं N 59 यत्र बोधिसत्त्वेन महासत्त्वेन प्रत्यात्मार्यगतिलक्षणसुखे न शिक्षितव्यम्। भावविकल्पस्वभावाभिनिवेशः पुनर्महामते श्रावकाणां कतमः? यदुत नीलपीतोष्णद्रवचलकठिनानि महाभूतान्यक्रियाप्रवृत्तानि स्वसामान्यलक्षणयुक्त्यागमप्रमाणसुविनिबद्धानि दृष्ट्वा तत्स्वभावाभिनिवेशविकल्पः प्रवर्तते। एतन्महामते बोधिसत्त्वेनाधिगम्य व्यावर्तयितव्यम्। धर्मनैरात्म्यलक्षणानुप्रवेशतया पुद्गलनैरात्म्यलक्षणदृष्टिं निवार्य भूमिक्रमानुसंधौ प्रतिष्ठापयितव्यम्। एतन्महामते श्रावकाणां भावविकल्पस्वभावाभिनिवेशलक्षणं यदुक्तम्, इदं तत्प्रत्युक्तम्॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—नित्यमचिन्त्यं च भगवता प्रत्यात्मार्यगतिगोचरं परमार्थगोचरं च प्रभाषितम्। ननु भगवंस्तीर्थकरा अपि नित्याचिन्त्यवादिनः कारणानाम्? भगवानाह—न महामते तीर्थकराणां कारणस्य नित्याचिन्त्यतां प्राप्नोति। तत्कस्य हेतोः? तीर्थकराणां महामते नित्याचिन्त्यं न हेतुस्वलक्षणयुक्तम्। N 60 यस्य महामते नित्याचिन्त्यं न हेतुस्वलक्षणयुक्तम्, तत्कथं केनाभिव्यज्यते नित्यमचिन्त्यमिति? नित्याचिन्त्यवादः पुनर्महामते यदि हेतुस्वलक्षणयुक्तः स्यात्, नित्यं कारणाधीनहेतुलक्षणत्वान्नित्यमचिन्त्यं न भवति। मम तु महामते परमार्थनित्याचिन्त्यं परमार्थलक्षणहेतुयुक्तं भावाभावविगतं प्रत्यात्मार्याधिगमलक्षणत्वाल्लक्षणवत्परमार्थज्ञानहेतुत्वाच्च हेतुमद्भावाभावविगतत्वादकृतकाकाशनिर्वाणनिरोधदृष्टान्तसाधर्म्यान्नित्यम्। अत एतन्महामते तीर्थकरनित्याचिन्त्यवादतुल्यं न भवति। नित्याचिन्त्यतैवेयं महामते तथागतानां प्रत्यात्मार्यज्ञानाधिगमतथता। तस्मात्तर्हि महामते बोधिसत्त्वेन महासत्त्वेन नित्याचिन्त्यप्रत्यात्मार्यज्ञानाधिगमाय योगः करणीयः॥

पुनरपरं महामते नित्याचिन्त्यता तीर्थकराणामनित्यभावविलक्षणहेतुत्वात्। न स्वकृतहेतुलक्षणप्रभावितत्वान्नित्यम्। यदि पुनर्महामते तीर्थकराणां नित्याचिन्त्यता कृतकभावाभावादनित्यतां दृष्ट्वा अनुमानबुद्ध्या नित्यं समाप्यते, तेनैव हेतुना ममापि महामते कृतक- N 61 भावाभावादनित्यतां दृष्ट्वा नित्यमहेतूपदेशात्॥

यदि पुनर्महामते हेतुलक्षणसंयुक्तं नित्याचिन्त्यता, तीर्थकराणां हेतुभावस्वलक्षणभावाभावाच्छशविषाणतुल्या महामते नित्याचिन्त्यता, वाग्विकल्पमात्रा च महामते तीर्थकराणां प्रसज्यते। तत्कस्य हेतोः? यदुत वाग्विकल्पमात्रं हि महामते शशविषाणं स्वहेतुलक्षणाभावात्। मम तु महामते नित्याचिन्त्यता प्रत्यात्मार्याधिगमलक्षणहेतुत्वात्कृतकभावा-

भाववर्जितत्वान्नित्यम्, न बाह्यभावाभावनित्यानित्यानुप्रमाणान्नित्यम् । यस्य पुनर्महामते बाह्याभावान्नित्यानुमानान्नित्याचिन्त्यत्वान्नित्यम्, तस्या नित्याचिन्त्यतायाः स्वहेतुलक्षणं न जानीते । प्रत्यात्माधिगमार्यज्ञानगोचरलक्षणं बहिर्धा ते महामते असंकथ्याः ॥

पुनरपरं महामते संसारविकल्पदुःखभयभीता निर्वाणमन्वेषन्ते । संसारनिर्वाणयोरविशेषज्ञाः सर्वभावविकल्पाभावादिन्द्रियाणामनागतविषयोपरमाच्च महामते निर्वाणं N 62 विकल्पयन्ति न प्रत्यात्मगतिविज्ञानालयं परावृत्तिपूर्वकं महामते । अतस्ते महामते मोहपुरुषा यानत्रयवादिनो भवन्ति, न चित्तमात्रगतिनिराभासवादिनः । अतस्ते महामते अतीतानागतप्रत्युत्पन्नानां तथागतानां स्वचित्तदृश्यगोचरानभिज्ञा बाह्यचित्तदृश्यगोचराभिनिविष्टाः । ते संसारगतिचक्रे पुनर्महामते चंक्रम्यन्ते ॥

पुनरपरं महामते अनुत्पन्नान् सर्वधर्मानतीतानागतप्रत्युत्पन्नास्तथागता भाषन्ते । तत्कस्य हेतोः ? यदुत स्वचित्तदृश्यभावाभावात्सदसतोरुत्पत्तिविरहितत्वान्महामते अनुत्पन्नाः सर्वभावाः । शशहयखरोष्ट्रविषाणतुल्या महामते सर्वधर्माः । बालपृथग्जनाभूतपरिकल्पितस्वभावविकल्पितत्वान्महामते अनुत्पन्नाः सर्वभावाः । प्रत्यात्मार्यज्ञानगतिगोचरो हि महामते सर्वभावस्वभावलक्षणोत्पादः, न बालपृथग्जनविकल्पद्वयगोचरस्वभावः । देहभोगप्रतिष्ठागतिस्वभावलक्षणं महामते आलयविज्ञानं[1] ग्राह्यग्राहकलक्षणेन प्रवर्तमानं बाला उत्पादस्थितिभङ्गदृष्टिद्वयपतिताशया उत्पादं सर्वभावानां सदसतोर्विकल्पयन्ति । अत्र ते महामते N 63 योगः करणीयः ॥

पुनरपरं महामते पञ्चाभिसमयगोत्राणि । कतमानि पञ्च ? यदुत श्रावकयानाभिसमयगोत्रं प्रत्येकबुद्धयानाभिसमयगोत्रं तथागतयानाभिसमयगोत्रम् अनियतैकतरगोत्रम् अगोत्रं च पञ्चमम् । कथं पुनर्महामते श्रावकयानाभिसमयगोत्रं प्रत्येतव्यम् ? यः स्कन्धधात्वायतनस्वसामान्यलक्षणपरिज्ञानाधिगमे देश्यमाने रोमाञ्चिततनुर्भवति । लक्षणपरिचयज्ञाने चास्य बुद्धिः प्रस्कन्दति, न प्रतीत्यसमुत्पादाविनिर्भागलक्षणपरिचये । इदं महामते श्रावकयानाभिसमयगोत्रम् । यः श्रावकयानाभिसमयं दृष्ट्वा षट्पञ्चम्यां भूमौ पर्युत्थानक्लेशप्रहीणो वासनक्लेशाप्रहीणोऽचिन्त्याच्युतिगतः सम्यक्सिंहनादं नदति—क्षीणा मे जातिः, उषितं ब्रह्मचर्यम्, इत्येवमादि निगद्य पुद्गलनैरात्म्यपरिचयाद्यावन्निर्वाणबुद्धिर्भवति ॥

अन्ये पुनर्महामते आत्मसत्त्वजीवपोषपुरुषपुद्गलसत्त्वावबोधान्निर्वाणमन्वेषन्ते । अन्ये पुनर्महामते कारणाधीनान् सर्वधर्मान् दृष्ट्वा निर्वाणगतिबुद्धयो भवन्ति । धर्मनैरात्म्यदर्शना- N 64 भावान्नास्ति मोक्षो महामते । एषा महामते श्रावकयानाभिसमयगोत्रकस्यानिर्याणनिर्याणबुद्धिः । अत्र ते महामते कुदृष्टिव्यावृत्त्यर्थं योगः करणीयः ॥

1 N °विज्ञानग्राह्य° for °विज्ञानं ग्राह्य°.

तत्र महामते प्रत्येकबुद्धयानाभिसमयगोत्रकः, यः प्रत्येकाभिसमये देश्यमाने अश्रुहृष्टरोमाञ्चिततनुर्भवति । असंसर्गप्रत्ययाद्भावाभिनिवेशबहुविविधस्वकायवैचित्र्यर्द्धिव्यस्तयमकप्रातिहार्यदर्शने निर्दिश्यमानेऽनुनीयते, स प्रत्येकबुद्धयानाभिसमयगोत्रक इति विदित्वा प्रत्येकबुद्धयानाभिसमयानुरूपा कथा करणीया। एतन्महामते प्रत्येकबुद्धयानाभिसमयगोत्रकस्य लक्षणम् ॥

तत्र महामते तथागतयानाभिसमयगोत्रं त्रिविधम्—यदुत स्वभावनिःस्वभावधर्माभिसमयगोत्रम्, अधिगमस्वप्रत्यात्मार्याभिसमयगोत्रम्, बाह्यबुद्धक्षेत्रौदार्याभिसमयगोत्रं च। यदा पुनर्महामते त्रयाणामप्येषामन्यतमे देश्यमाने स्वचित्तदृश्यदेहालयभोगप्रतिष्ठाचिन्त्यविषये देश्यमाने नोत्रसति न संत्रसति न संत्रासमापद्यते, वेदितव्यमयं तथागतयानाभि-
N 65 समयगोत्रक इति। एतन्महामते तथागतयानाभिसमयगोत्रकस्य लक्षणम् ॥

अनियतगोत्रकः पुनर्महामते त्रिष्वप्येतेषु देश्यमानेषु यत्रानुनीयते तत्रानुयोज्यः स्यात्। परिकर्मभूमिरियं महामते गोत्रव्यवस्था। निराभासभूम्यवक्रमणतया व्यवस्था क्रियते। प्रत्यात्मालये तु स्वक्लेशवासनाशुद्धस्य धर्मनैरात्म्यदर्शनात्समाधिसुखविहारं प्राप्य श्रावको जिनकायतां प्रतिलप्स्यते ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

स्रोतापत्तिफलं चैव सकृदागामिनस्तथा।
अनागामिफलं चैव अर्हत्त्वं चित्तविभ्रमम् ॥ १२८ ॥
त्रियानमेकयानं च अयानं च वदाम्यहम्।
बालानां मन्दबुद्धीनामार्याणां च विविक्तताम् ॥ १२९ ॥
द्वारं हि परमार्थस्य विज्ञप्तिर्द्वयवर्जिता।
यानत्रयव्यवस्थानं निराभासे स्थिते कुतः ॥ १३० ॥
ध्यानानि चाप्रमाणानि आरूप्याश्च समाधयः।
संज्ञानिरोधो निखिलं चित्तमात्रे न विद्यते ॥ १३१ ॥

N 66 तत्रेच्छन्तिकानां[1] पुनर्महामते अनिच्छन्तिकतामोक्षं केन प्रवर्तते ? यदुत सर्वकुशलमूलोत्सर्गतश्च सत्त्वानादिकालप्रणिधानतश्च। तत्र सर्वकुशलमूलोत्सर्गः कतमः ? यदुत बोधिसत्त्वपिटकनिक्षेपोऽभ्याख्यानं च नैते सूत्रान्ता विनयमोक्षानुकूला इति ब्रुवतः सर्वकुशलमूलोत्सर्गत्वान्न निर्वायते। द्वितीयः पुनर्महामते बोधिसत्त्वो महासत्त्व एवं भवप्रणिधानोपायपूर्वकत्वान्नापरिनिर्वृतैः सर्वसत्त्वैः परिनिर्वास्यामीति ततो न परिनिर्वाति। एतन्महामते अपरिनिर्वाणधर्मकाणां लक्षणं येनेच्छन्तिकगतिं समधिगच्छन्ति ॥

पुनरपि महामतिराह—कतमोऽत्र भगवन् अत्यन्ततो न परिनिर्वाति ? भगवानाह—बोधिसत्त्वेच्छन्तिकोऽत्र महामते आदिपरिनिर्वृतान् सर्वधर्मान् विदित्वा अत्यन्ततो न परि-

---

[1] इच्छन्तिक means one who is destitute of Buddha-nature.

निर्वाति । न पुनः सर्वकुशलमूलोत्सर्गेच्छन्तिकः । सर्वकुशलमूलोत्सर्गेच्छन्तिको हि महामते पुनरपि तथागताधिष्ठानात्कदाचित्कर्हिचित्कुशलमूलान् व्युत्थापयति । तत्कस्य हेतोः ? यदुत अपरित्यक्ता हि महामते तथागतानां सर्वसत्त्वाः । अत एतस्मात्कारणान्महामते बोधिसत्त्वेच्छन्तिको न परिनिर्वातीति ॥ N 67

पुनरपरं महामते बोधिसत्त्वेन महासत्त्वेन स्वभावलक्षणत्रयकुशलेन भवितव्यम् । तत्र महामते परिकल्पितस्वभावो निमित्तात्प्रवर्तते । कथं पुनर्महामते परिकल्पितस्वभावो निमित्तात्प्रवर्तते ? तत्र महामते परतन्त्रस्वभावो वस्तुनिमित्तलक्षणाकारः ख्यायते । तत्र महामते वस्तुनिमित्तलक्षणाभिनिवेशः पुनर्द्विप्रकारः । परिकल्पितस्वभावं व्यवस्थापयन्ति तथागता अर्हन्तः सम्यक्संबुद्धा नामाभिनिवेशलक्षणेन च नामवस्तुनिमित्ताभिनिवेशलक्षणेन च । तत्र वस्तुनिमित्ताभिनिवेशलक्षणं पुनर्महामते यदुत अध्यात्मबाह्यधर्माभिनिवेशः । निमित्तलक्षणाभिनिवेशः पुनर्यदुत तेष्वेव आध्यात्मिकबाह्येषु धर्मेषु स्वसामान्यलक्षणपरिज्ञानावबोधः । एतन्महामते द्विप्रकारं परिकल्पितस्वभावस्य लक्षणम् । यदाश्रयालम्बनात्प्रवर्तते तत्परतन्त्रम् । तत्र महामते परिनिष्पन्नस्वभावः कतमः ? यदुत निमित्तनामवस्तुलक्षणविकल्पविरहितं तथतार्यज्ञानगतिगमनप्रत्यात्मार्यज्ञानगतिगोचरः । एष महामते परि- N 68
निष्पन्नस्वभावस्तथागतगर्भहृदयम् ॥

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत—

निमित्तं नाम संकल्पः स्वभावद्वयलक्षणम् ।
सम्यग्ज्ञानं हि तथता परिनिष्पन्नलक्षणम् ॥ १३२ ॥

एष महामते पञ्चधर्मस्वभावलक्षणप्रविचयो नाम धर्मपर्यायः प्रत्यात्मार्यज्ञानगतिगोचरः, यत्र त्वया अन्यैश्च बोधिसत्त्वैः शिक्षितव्यम् ॥

पुनरपरं महामते बोधिसत्त्वेन महासत्त्वेन नैरात्म्यद्वयलक्षणप्रविचयकुशलेन भवितव्यम् । तत्र महामते कतमन्नैरात्म्यद्वयलक्षणम् ? यदुत आत्मात्मीयरहितस्कन्धधात्वायतनकदम्बकमज्ञानकर्मतृष्णाप्रभवं चक्षुषा रूपादिग्रहणाभिनिवेशात्प्रवर्तमानं विज्ञानं सर्वेन्द्रियैः स्वचित्तदृश्यभाजनदेहालयस्वचित्तविकल्पविकल्पितं विज्ञापयति । नदीबीजदीपवायुमेघसदृशक्षणपरंपराभेदभिन्नं चपलं वानरमक्षिकासदृशमचौक्षमचौक्षविषयचार्यनाथोऽनल N 69
इवातृप्तमनादिकालप्रपञ्चविषयवासनारहितमरघट्टचक्रयन्त्रचक्रवत्संसारभवगतिचक्रे विचित्रदेहरूपधारिमायावेतालयन्त्रप्रतिमं प्रवर्तमानं प्रवर्तते । यदत्र महामते लक्षणकौशलज्ञानम्, इदमुच्यते पुद्गलनैरात्म्यज्ञानम् ॥

तत्र महामते धर्मनैरात्म्यज्ञानं कतमत् ? यदुत स्कन्धधात्वायतनानां परिकल्पितलक्षणस्वभावावबोधः । यथा महामते स्कन्धधात्वायतनान्यात्मविरहितानि स्कन्धसमूहमात्रं हेतुकर्मतृष्णासूत्रोपनिबद्धमन्योन्यप्रत्ययतया प्रवर्तते निरीहम्, तथा स्कन्धा अपि महामते स्वसामान्यलक्षणविरहिता अभूतपरिकल्पलक्षणविचित्रप्रभाविता बालैर्विकल्प्यन्ते न त्वार्यैः ।

चित्तमनोमनोविज्ञानपञ्चधर्मस्वभावरहितान् महामते सर्वधर्मान् विभावयन् बोधिसत्त्वो महासत्त्वो धर्मनैरात्म्यकुशलो भवति। धर्मनैरात्म्यकुशलः पुनर्महामते बोधिसत्त्वो महासत्त्वो नचिरात्प्रथमां बोधिसत्त्वभूमिं निराभासप्रविचयां प्रतिलभते। भूमिलक्षणप्रविचयावबोधात्प्रमुदितानन्तरमनुपूर्वं नवसु भूमिषु कृतविद्यो महाधर्ममेघां प्रतिलभते। स तस्यां N 70 प्रतिष्ठितोऽनेकरत्नमुक्तोपशोभिते महापद्मराजे पद्मकृतौ महारत्नविमाने मायास्वभावगोचरपरिचयाभिनिर्वृत्ते निषण्णः तदनुरूपैर्जिनपुत्रैः परिवृतः सर्वबुद्धक्षेत्रागतैर्बुद्धपाण्यभिषेकैश्चक्रवर्तिपुत्रवदभिषिच्यते। बुद्धसुतभूमिमतिक्रम्य प्रत्यात्मार्यधर्मगतिगमनत्वात्तथागतो धर्मकायवशवर्ती भविष्यति धर्मनैरात्म्यदर्शनात्। एतन्महामते सर्वधर्मनैरात्म्यलक्षणम्। अत्र ते महामते शिक्षितव्यम्, अन्यैश्च बोधिसत्त्वैर्महासत्त्वैः॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—समारोपापवादलक्षणं मे भगवान् देशयतु यथाहं च अन्ये च बोधिसत्त्वाः समारोपापवादकुदृष्टिवर्जितमतयः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्येरन्। अभिसंबुध्य शाश्वतसमारोपापवादोच्छेददृष्टिविवर्जितास्तव बुद्धनेत्रीं नापवदिष्यन्ते॥

अथ खलु भगवान् पुनरपि महामतेर्बोधिसत्त्वस्य महासत्त्वस्याध्येषणां विदित्वा इमां गाथामभाषत—

समारोपापवादो हि चित्तमात्रे न विद्यते।
देहभोगप्रतिष्ठाभं ये चित्तं नाभिजानते।
समारोपापवादेषु ते चरन्त्यविपश्चितः॥ १३३॥

N 71 अथ खलु भगवानेतमेव गाथार्थमुद्द्योतयन् पुनरप्येतदवोचत्—चतुर्विधो महामते असत्समारोपः। कतमश्चतुर्विधः? यदुत असल्लक्षणसमारोपोऽसद्दृष्टिसमारोपोऽसद्धेतुसमारोपोऽसद्भावसमारोपः। एष हि महामते चतुर्विधः समारोपः॥

अपवादः पुनर्महामते कतमः? यदुत अस्यैव कुदृष्टिसमारोपस्यानुपलब्धिप्रविचयाभावादपवादो भवति। एतद्धि महामते समारोपापवादस्य लक्षणम्॥

पुनरपरं महामते असल्लक्षणसमारोपस्य लक्षणं कतमत्? यदुत स्कन्धधात्वायतननामसत्त्वसामान्यलक्षणाभिनिवेशः—इदमेवमिदं नान्यथेति। एतद्धि महामते असल्लक्षणसमारोपस्य लक्षणम्। एष हि महामते असल्लक्षणसमारोपविकल्पोऽनादिकालप्रपञ्चदौष्ठुल्यविचित्रवासनाभिनिवेशात्प्रवर्तते। एतद्धि महामते असल्लक्षणसमारोपस्य लक्षणम्॥

असद्दृष्टिसमारोपः पुनर्महामते यस्तेष्वेव स्कन्धधात्वायतनेष्वात्मसत्त्वजीवजन्तुपोषपुरुषपुद्गलदृष्टिसमारोपः। अयमुच्यते महामते असद्दृष्टिसमारोपः॥

N 72 असद्धेतुसमारोपः पुनर्महामते यदुत अहेतुसमुत्पन्नं प्राग्विज्ञानं पश्चादभूत्वा मायावदनुत्पन्नं पूर्वं चक्षूरूपालोकस्मृतिपूर्वकं प्रवर्तते। प्रवृत्य भूत्वा च पुनर्विनश्यति। एष महामते असद्धेतुसमारोपः॥

असद्भावसमारोपः पुनर्महामते यदुत आकाशनिरोधनिर्वाणाकृतकभावाभिनिवेशसमारोपः । एते च महामते भावाभावविनिवृत्ताः । शशहयखरोष्ट्रविषाणकेशोण्डुकप्रख्या महामते सर्वधर्माः सदसत्पक्षविगताः । समारोपापवादांश्च[1] बालैर्विकल्प्यन्ते स्वचित्तदृश्यमात्रानवधारितमतिभिर्न त्वार्यैः । एतन्महामते असद्भावविकल्पसमारोपापवादस्य लक्षणम् । तस्मात्तर्हि महामते समारोपापवाददृष्टिविगतेन भवितव्यम् ॥

पुनरपरं महामते बोधिसत्त्वाश्चित्तमनोमनोविज्ञानपञ्चधर्मस्वभावनैरात्म्यलक्षणद्वयगतिं गत्वा परहितहेतोरनेकरूपवेशधारिणो भवन्ति । परिकल्पितस्वभावा इव परतन्त्राशया विश्वरूपचिन्तामणिसदृशाः सर्वबुद्धक्षेत्रपर्षन्मण्डलगता मायास्वप्नप्रतिभासप्रतिबिम्बोदकचन्द्रगतिसमानुत्पादभङ्गशाश्वतोच्छेदरहितान् सर्वधर्मान् संमुखं सर्वतथागतेभ्यः सर्वश्रावकप्रत्येकबुद्धयानविरहान् धर्मदेशनां शृण्वन्ति, समाधिमुखशतसहस्राणि च प्रतिलभन्ते । यावदने- N 73
कानि समाधिकोटीनियुतशतसहस्राणि प्रतिलभ्य तैः समाधिभिः क्षेत्रात्क्षेत्रं संक्रामन्ति । बुद्धपूजाभियुक्ताश्च सर्वोपपत्तिदेवभवनालयेषु रत्नत्रयमुपदेश्य बुद्धरूपमास्थाय श्रावकगणबोधिसत्त्वगणपरिवृताः स्वचित्तदृश्यमात्रावतारणतया बाह्यभावाभावोपदेशं कुर्वन्ति सदसत्पक्षविनिवृत्त्यर्थम् ॥

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत—

चित्तमात्रं यदा लोकं प्रपश्यन्ति जिनात्मजाः ।
तदा नैर्माणिकं कायं क्रियासंस्कारवर्जितम् ।
लभन्ते ते बलाभिज्ञावशितैः सह संयुतम् ॥ १३४ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमध्येषते स्म—देशयतु भगवान् शून्यतानुत्पादाद्वयनिःस्वभावलक्षणं सर्वधर्माणाम्, येन शून्यतानुत्पादाद्वयनिःस्वभावलक्षणावबोधेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वा नास्त्यस्तिविकल्पवर्जिताः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्येरन् ॥

अथ खलु भगवान् महामतिं बोधिसत्त्वं महासत्त्वमेतदवोचत्—तेन हि महामते शृणु, तत्साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधि- N 74
सत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवानेतदवोचत्—शून्यता शून्यतेति महामते परिकल्पितस्वभावपदमेतत् । परिकल्पितस्वभावाभिनिवेशेन पुनर्महामते शून्यतानुत्पादाभावाद्वयनिःस्वभावभाववादिनो भवन्ति । तत्र महामते संक्षेपेण सप्तविधा शून्यता । यदुत लक्षणशून्यता भावस्वभावशून्यता अप्रचरितशून्यता प्रचरितशून्यता सर्वधर्मनिरभिलाप्यशून्यता परमार्थार्यज्ञानमहाशून्यता इतरेतरशून्यता च सप्तमी ॥

---

१ N °वादैः for °वादाः.

तत्र महामते लक्षणशून्यता कतमा ? यदुत स्वसामान्यलक्षणशून्याः सर्वभावाः । परस्परसमूहापेक्षितत्वात्प्रविचयविभागाभावान्महामते स्वसामान्यलक्षणस्याप्रवृत्तिः । स्वपरोभयाभावाच्च महामते लक्षणं नावतिष्ठते । अतस्तदुच्यते स्वलक्षणशून्याः सर्वभावा इति ॥

भावस्वभावशून्यता पुनर्महामते कतमा ? यदुत स्वयं स्वभावाभावोत्पत्तितो महामते भावस्वभावशून्यता भवति सर्वधर्माणाम् । तेनोच्यते भावस्वभावशून्यतेति ॥

N 75 अप्रचरितशून्यता पुनर्महामते कतमा ? यदुत अप्रचरितपूर्वं निर्वाणं स्कन्धेषु । तेनोच्यते अप्रचरितशून्यतेति ॥

प्रचरितशून्यता पुनर्महामते कतमा ? यदुत स्कन्धा आत्मात्मीयरहिता हेतुयुक्तिक्रियाकर्मयोगैः प्रवर्तमानाः प्रवर्तन्ते । तेनोच्यते प्रचरितशून्यतेति ॥

सर्वधर्मनिरभिलाप्यशून्यता पुनर्महामते कतमा ? यदुत परिकल्पितस्वभावानभिलाप्यत्वान्निरभिलाप्यशून्याः सर्वधर्माः । तेनोच्यते निरभिलाप्यशून्यतेति ॥

परमार्थार्यज्ञानमहाशून्यता पुनर्महामते कतमा ? यदुत स्वप्रत्यात्मार्यज्ञानाधिगमः सर्वदृष्टिदोषवासनाभिः शून्यः । तेनोच्यते परमार्थार्यज्ञानमहाशून्यतेति ॥

इतरेतरशून्यता पुनर्महामते कतमा ? यदुत यद्यत्र नास्ति तत्तेन शून्यमित्युच्यते । तद्यथा महामते शृगालमातुः प्रासादे हस्तिगवैडकाद्या न सन्ति । अशून्यं च भिक्षुभिरिति भाषितं मया । स च तैः शून्य इत्युच्यते । न च पुनर्महामते प्रासादः प्रासादभावतो नास्ति, भिक्षवश्च भिक्षुभावतो न सन्ति । न च तेऽन्यत्र हस्तिगवैडकाद्या भावा नावतिष्ठन्ते । इदं महामते स्वसामान्यलक्षणं सर्वधर्माणाम् । इतरेतरं तु न संविद्यते । तेनोच्यते इतरेतरशून्यतेति । एषा महामते सप्तविधा शून्यता । एषा च महामते इतरेतरशून्यता सर्वजघन्या । सा च त्वया परिवर्जयितव्या ॥

N 76 न स्वयमुत्पद्यते, न च पुनर्महामते ते नोत्पद्यन्ते अन्यत्र समाध्यवस्थायाम् । तेनोच्यन्ते अनुत्पन्ना निःस्वभावाः । अनुत्पत्तिं संधाय महामते निःस्वभावाः सर्वभावाः । क्षणसंततिप्रबन्धाभावाच्च अन्यथाभावदर्शनान्महामते निःस्वभावाः सर्वभावाः । तेनोच्यते निःस्वभावाः सर्वभावा इति ॥

अद्वयलक्षणं पुनर्महामते कतमत् ? यदुत च्छायातपवद्दीर्घह्रस्वकृष्णशुक्लवन्महामते द्वयप्रभाविता न पृथक्पृथक् । एवं संसारनिर्वाणवन्महामते सर्वधर्मा अद्वयाः । न यत्र महामते निर्वाणं तत्र संसारः । न च यत्र संसारस्तत्र निर्वाणम्, विलक्षणहेतुसद्भावात् । तेनोच्यते अद्वया संसारपरिनिर्वाणवत्सर्वधर्मा इति । तस्मात्तर्हि महामते शून्यतानुत्पादाद्वयनिःस्वभावलक्षणे योगः करणीयः ॥

अथ खलु भगवांस्तस्यां वेलायामिमे गाथे अभाषत—

देशेमि शून्यतां नित्यं शाश्वतोच्छेदवर्जिताम् ।
संसारं स्वप्नमायाख्यं न च कर्म विनश्यति ॥ १३५ ॥

आकाशमथ निर्वाणं निरोधं द्वयमेव च ।
बालाः कल्पेन्त्यकृतकानार्या नास्त्यस्ति[1]वर्जितान् ॥ १३६ ॥ N 77

अथ खलु भगवान् पुनरपि महामतिं बोधिसत्त्वं महासत्त्वमेतदवोचत्—एतद्धि महामते शून्यतानुत्पादाद्वयनिःस्वभावलक्षणं सर्वबुद्धानां सर्वसूत्रान्तगतम् । यत्र क्वचित्सूत्रान्तेऽयमेवार्थो विभावयितव्यः । एष हि महामते सूत्रान्तः सर्वसत्त्वाशयदेशनार्थव्यभिचारणी, न सा तत्त्वप्रत्यवस्थानकथा । तद्यथा महामते मृगतृष्णिका मृगोल्लापिनी उदकभावाभिनिवेशेनाभिनिवेश्यते, तस्यां चोदकं नास्ति, एवमेव महामते सर्वसूत्रान्तदेशना धर्मा बालानां स्वविकल्पसंतोषणम्, न तु सा तत्त्वार्यज्ञानव्यवस्थानकथा । तस्मात्तर्हि महामते अर्थानुसारिणा भवितव्यं न देशनाभिलापाभिनिविष्टेन ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—तथागतगर्भः पुनर्भगवता सूत्रान्तपाठेऽनुवर्णितः । स च किल त्वया प्रकृतिप्रभास्वरविशुद्ध्यादिविशुद्ध एव वर्ण्यते द्वात्रिंशल्लक्षणधरः सर्वसत्त्वदेहान्तर्गतः । महार्घमूल्यरत्नं मलिनवस्तुपरिवेष्टितमिव स्कन्धधात्वायतनवस्तुवेष्टितो रागद्वेषमोहाभूतपरिकल्पमलमलिनो नित्यो ध्रुवः शिवः शाश्वतश्च N 78
भगवता वर्णितः । तत्कथमयं भगवंस्तीर्थकरात्मवादतुल्यस्तथागतगर्भवादो न भवति ? तीर्थकरा अपि भगवन् नित्यः कर्ता निर्गुणो विभुरव्यय इत्यात्मवादोपदेशं कुर्वन्ति ॥

भगवानाह—न हि महामते तीर्थकरात्मवादतुल्यो मम तथागतगर्भोपदेशः । किं तु महामते तथागताः शून्यताभूतकोटिनिर्वाणानुत्पादानिमित्ताप्रणिहिताद्यानां महामते पदार्थानां तथागतगर्भोपदेशं कृत्वा तथागता अर्हन्तः सम्यक्संबुद्धा बालानां नैरात्म्यसंत्रासपदविवर्जनार्थं[2] निर्विकल्पनिराभासगोचरं तथागतगर्भमुखोपदेशेन देशयन्ति । न चात्र महामते अनागतप्रत्युत्पन्नैः बोधिसत्त्वैर्महासत्त्वैरात्माभिनिवेशः कर्तव्यः । तद्यथा महामते कुम्भकार एकस्मान्मृत्परमाणुराशेर्विविधानि भाण्डानि करोति हस्तशिल्पदण्डोदकसूत्रप्रयत्नयोगात्, एवमेव महामते तथागतास्तदेव धर्मनैरात्म्यं सर्वविकल्पलक्षणविनिवृत्तं विविधैः प्रज्ञोपायकौशल्ययोगैर्गर्भोपदेशेन वा नैरात्म्योपदेशेन वा कुम्भकारवच्चित्रैः पदव्यञ्जनपर्यायैर्देशयन्ते । एतस्मात्कारणान्महामते तीर्थकरात्मवादोपदेशतुल्यस्तथागतगर्भोपदेशो न भवति । एवं हि N 79
महामते तथागतगर्भोपदेशमात्मवादाभिनिविष्टानां तीर्थकराणामाकर्षणार्थं तथागतगर्भोपदेशेन निर्दिशन्ति—कथं बत अभूतात्मविकल्पदृष्टिपतिताशया विमोक्षत्रयगोचरपतिताशयोपेताः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्येरन्निति । एतदर्थं महामते तथागता अर्हन्तः सम्यक्संबुद्धास्तथागतगर्भोपदेशं कुर्वन्ति । अत एतन्न भवति तीर्थकरात्मवादतुल्यम् । तस्मात्तर्हि महामते तीर्थकरदृष्टिविनिवृत्त्यर्थं तथागतनैरात्म्यगर्भानुसारिणा च ते भवितव्यम् ॥

---

१ N °वर्जिताः. २ N °विवर्जितार्थं.

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत—

पुद्गलः संततिः स्कन्धाः प्रत्यया अणवस्तथा ।
प्रधानमीश्वरः कर्ता चित्तमात्रं विकल्प्यते ॥ १३७ ॥

अथ खलु महामतिर्बोधिसत्त्वोऽनागतां जनतां समालोक्य पुनरपि भगवन्तमध्येषते स्म—देशयतु मे भगवान् योगाभिसमयं यथा बोधिसत्त्वा महासत्त्वा महायोगयोगिनो भवन्ति । भगवानाह—चतुर्भिर्महामते धर्मैः समन्वागता बोधिसत्त्वा महायोगयोगिनो भवन्ति । N 80 कतमैश्चतुर्भिः ? यदुत स्वचित्तदृश्यविभावनतया च उत्पादस्थितिभङ्गदृष्टिविवर्जनतया च बाह्यभावाभावोपलक्षणतया च स्वप्रत्यात्मार्यज्ञानाधिगमाभिलक्षणतया च । एभिर्महामते चतुर्भिर्धर्मैः समन्वागता बोधिसत्त्वा महासत्त्वा महायोगयोगिनो भवन्ति ॥

तत्र कथं महामते बोधिसत्त्वो महासत्त्वः स्वचित्तदृश्यविभावनाकुशलो भवति ? यदुत स एवं प्रत्यवेक्षते—स्वचित्तमात्रमिदं त्रैधातुकमात्मात्मीयरहितं निरीहमायूहनियूहविगतमनादिकालप्रपञ्चदौष्ठुल्यवासनाभिनिवेशवासितं त्रैधातुकविचित्ररूपोपचारोपनिबद्धं देहभोगप्रतिष्ठागतिविकल्पानुगतं विकल्प्यते ख्यायते च । एवं हि महामते बोधिसत्त्वो महासत्त्वः स्वचित्तदृश्यविभावनाकुशलो भवति ॥

कथं पुनर्महामते बोधिसत्त्वो महासत्त्व उत्पादस्थितिभङ्गदृष्टिविवर्जितो भवति ? यदुत मायास्वप्नरूपजन्मसदृशाः सर्वभावाः स्वपरोभयाभावान्नोत्पद्यन्ते । स्वचित्तमात्रानुसारित्वाद्बाह्यभावाभावदर्शनाद्विज्ञानानामप्रवृत्तिं दृष्ट्वा प्रत्ययानामकूटराशित्वं च विकल्पप्रत्ययोद्भवं N 81 त्रैधातुकं पश्यन्तोऽध्यात्मबाह्यसर्वधर्मानुपलब्धिभिर्निःस्वभावदर्शनादुत्पाददृष्टिविनिवृत्तौ मायादिधर्मस्वभावानुगमादनुत्पत्तिकधर्मक्षान्तिं प्रतिलभन्ते । अष्टम्यां भूमौ स्थिताः चित्तमनोमनोविज्ञानपञ्चधर्मस्वभावनैरात्म्यद्वयगतिपरावृत्त्यधिगमान्मनोमयकायं प्रतिलभन्ते ॥

महामतिराह—मनोमयकाय इति भगवन् केन कारणेन ? भगवानाह—मनोमय इति महामते मनोवदप्रतिहतशीघ्रगामित्वान्मनोमय इत्युच्यते । तद्यथा महामते मनोऽप्रतिहतं गिरिकुड्यनदीवृक्षादिष्वनेकानि योजनशतसहस्राणि पूर्वदृष्टानुभूतान् विषयाननुस्मरन् स्वचित्तप्रबन्धाविच्छिन्नशरीरमप्रतिहतगति प्रवर्तते, एवमेव महामते मनोमयकायसहप्रतिलम्भेन मायोपमसमेन समाधिना बलवशिताभिज्ञानलक्षणकुसुमितमार्यगतिनिकायसहजो मन इव प्रवर्ततेऽप्रतिहतगतिः पूर्वप्रणिधानविषयाननुस्मरन् सत्त्वपरिपाकार्थम् । एवं हि महामते बोधिसत्त्वो महासत्त्व उत्पादस्थितिभङ्गदृष्टिविवर्जितो भवति ॥

N 82 तत्र कथं महामते बोधिसत्त्वो महासत्त्वो बाह्यभावाभावोपलक्षणकुशलो भवति ? यदुत मरीचिस्वप्नकेशोण्डुकप्रख्या महामते सर्वभावाः । अनादिकालप्रपञ्चदौष्ठुल्यविचित्रविपाकविकल्पवासनाभिनिवेशहेतुकाः सर्वभावस्वभावा इति संपश्यन् प्रत्यात्मार्यज्ञानगतिविषयमभिलषते । एभिर्महामते चतुर्भिर्धर्मैः समन्वागता बोधिसत्त्वा महासत्त्वा महायोगयोगिनो भवन्ति । अत्र ते महामते योगः करणीयः ॥

अथ खलु महामतिर्बोधिसत्त्वः पुनरपि भगवन्तमध्येषते स्म–देशयतु मे भगवान् हेतुप्रत्ययलक्षणं सर्वधर्माणाम्, येन हेतुप्रत्ययलक्षणावबोधेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वा सदसद्दृष्टिविकल्परहिताः सर्वभावनाक्रमं युगपदुत्पत्तिं न कल्पयेयुः ॥

भगवानाह–द्विप्रकारं महामते प्रतीत्यसमुत्पादहेतुलक्षणं सर्वधर्माणां यदुत बाह्यं च आध्यात्मिकं च । तत्र बाह्यप्रतीत्यसमुत्पादो महामते । मृत्पिण्डदण्डचक्रसूत्रोदकपुरुषप्रयत्नादिप्रत्ययैर्महामते घट उत्पद्यते । यथा च महामते घटो मृत्पिण्डादेव, तन्तुभ्यः पटाः, वीरणेभ्यः कटाः, बीजादङ्कुरः, मन्थादि[1]पुरुषप्रयत्नयोगाद्दध्नो नवनीत उत्पद्यते, एवमेव N 83 महामते बाह्यः प्रतीत्यसमुत्पादः पूर्वोत्तरोत्तरो द्रष्टव्यम् ॥

तत्र आध्यात्मिकः प्रतीत्यसमुत्पादो यदुत अविद्या तृष्णा कर्मेत्येवमाद्या महामते धर्माः प्रतीत्यसमुत्पादसंज्ञां प्रतिलभन्ते । एभ्य उत्पन्ना महामते स्कन्धधात्वायतनाख्या धर्माः प्रतीत्यसमुत्पादसंज्ञां प्रतिलभन्ते । ते चाविशिष्टाः, कल्प्यन्ते च बालैः ॥

तत्र हेतुर्महामते षड्विधः । यदुत भविष्यद्धेतुः संबन्धहेतुर्लक्षणहेतुः कारणहेतुर्व्यञ्जनहेतुरुपेक्षाहेतुर्महामते षष्ठः । तत्र भविष्यद्धेतुर्महामते हेतुकृत्यं करोत्यध्यात्मबाह्योत्पत्तौ धर्माणाम् । संबन्धहेतुः पुनर्महामते आलम्बनकृत्यं करोत्यध्यात्मिकबाह्योत्पत्तौ स्कन्धबीजादीनाम् । लक्षणहेतुः पुनरपरं महामते अनन्तरक्रियालक्षणोपरिबद्धं जनयति । कारणहेतुः पुनर्महामते आधिपत्याधिकारकृत्यं करोति चक्रवर्तिनृपवत् । व्यञ्जनहेतुः पुनर्महामते उत्पन्नस्य विकल्पस्य भावस्य लक्षणोद्द्योतनकृत्यं[2] करोति प्रदीपवद्रूपादीनाम् । उपेक्षाहेतुः पुनर्महामते विनिवृत्तिकाले प्रबन्धक्रियाव्युच्छित्तिं करोत्यविकल्पोत्पत्तौ ॥ N 84

एते हि महामते स्वविकल्पकल्पिता बालपृथग्जनैर्न क्रमवृत्त्या न युगपत्प्रवर्तन्ते । तत्कस्य हेतोः ? यदि पुनर्महामते युगपत्प्रवर्तेरन्, कार्यकारणविभागो न स्यादप्रतिलब्धहेतुलक्षणत्वात् । अथ क्रमवृत्त्या प्रवर्तेरन्, अलब्धस्य लक्षणात्मकत्वात्क्रमवृत्त्या न प्रवर्तते । अजातपुत्रपितृशब्दवन्महामते क्रमवृत्तिसंबन्धयोगा न घटन्ते । तार्किकाणां हेत्वारम्बणनिरन्तराधिपतिप्रत्ययादिभिर्जन्यजनकत्वान्महामते क्रमवृत्त्या नोत्पद्यन्ते । परिकल्पितस्वभावाभिनिवेशलक्षणान्महामते युगपन्नोत्पद्यन्ते । स्वचित्तदृश्यदेहभोगप्रतिष्ठानत्वात्स्वसामान्यलक्षणबाह्यभावाभावान्महामते क्रमेण युगपद्वा नोत्पद्यन्ते । अन्यत्र स्वचित्तदृश्यविकल्पविकल्पितत्वाद्विज्ञानं प्रवर्तते । तस्मात्तर्हि महामते हेतुप्रत्ययक्रियायोगलक्षणक्रमयुगपद्दृष्टिविगतेन ते भवितव्यम् ॥

तत्रेदमुच्यते–

न ह्यत्रोत्पद्यते किंचित्प्रत्ययैर्न निरुध्यते ।
उत्पद्यन्ते निरुध्यन्ते प्रत्यया एव कल्पिताः ॥ १३८ ॥

---

१ N खण्डादि° for मन्थादि° which is supported by T. २ N लक्षणोद्योतनं कृत्यं.

N 85 न भङ्गोत्पादसंक्लेशः प्रत्ययानां निवार्यते।
यत्र बाला विकल्पन्ति प्रत्ययैः स निवार्यते॥ १३९॥

यच्चासतः प्रत्ययेषु धर्माणां नास्ति संभवः।
वासनैर्भ्रामितं चित्तं त्रिभवे ख्यायते यतः।
नाभूत्वा जायते किंचित्प्रत्ययैर्न विरुध्यते॥ १४०॥

वन्ध्यासुताकाशपुष्पं यदा पश्यन्ति संस्कृतम्।
तदा ग्राहश्च ग्राह्यं च भ्रान्तिं दृष्ट्वा निवर्तते॥ १४१॥

न चोत्पाद्यं न चोत्पन्नः प्रत्ययोऽपि न किंचन।
संविद्यते क्वचित्केचिद्व्यवहारस्तु कथ्यते॥ १४२॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्–देशयतु मे भगवान् वाग्विकल्पलक्षणहृदयं नाम धर्मपर्यायं येन वाग्विकल्पलक्षणहृदयेन भगवन् सुप्रतिविभागविनिवद्धेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वा अभिलापाभिलाप्यार्थद्वयगतिंगताः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्य अभिलापाभिलाप्यार्थद्वयगतिं सर्वसत्त्वानां विशोधयेयुः। भगवानाह–तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं
N 86 ते। साधु भगवन् इति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत्। भगवानस्यैतदवोचत्–चतुर्विधं महामते वाग्विकल्पलक्षणं भवति। यदुत लक्षणवाक् स्वप्नवाक् दौष्ठुल्यविकल्पाभिनिवेशवाक् अनादिविकल्पवाक्॥

तत्र महामते लक्षणवाक् स्वविकल्परूपनिमित्ताभिनिवेशात्प्रवर्तते। स्वप्नवाक् पुनर्महामते पूर्वानुभूतविषयानुस्मरणात्प्रतिविबुद्धविषयाभावाच्च प्रवर्तते। दौष्ठुल्यविकल्पाभिनिवेशवाक् पुनर्महामते शत्रुपूर्वकृतकर्मानुस्मरणात्प्रवर्तते। अनादिकालविकल्पवाक् पुनर्महामते अनादिकालप्रपञ्चाभिनिवेशदौष्ठुल्यस्वबीजवासनातः प्रवर्तते। एतद्धि महामते चतुर्विधं वाग्विकल्पलक्षणमिति मे यदुक्तम्, इदं तत्प्रत्युक्तम्॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतमेवार्थमध्येषते स्म–देशयतु मे भगवान् पुनरपि वाग्विकल्पाभिव्यक्तिगोचरम्। कुत्र कस्मात् कथं केन भगवन् नृणां वाग्विज्ञप्तिविकल्पः प्रवर्तते? भगवानाह–शिरउरोनासाकण्ठताल्वोष्ठजिह्वादन्तसमवाया-
N 87 न्महामते वाक् प्रवर्तमाना प्रवर्तते। महामतिराह–किं पुनर्भगवन् वाग् विकल्पादन्या उत अनन्या? भगवानाह–न हि महामते वाग् विकल्पादन्या नानन्या। तत्कस्य हेतोः? यदुत तद्धेतूत्पत्तिलक्षणत्वान्महामते वाग्विकल्पः प्रवर्तते। यदि पुनर्महामते वाग् विकल्पादन्या स्यात्, अविकल्पहेतुकी स्यात्। अथानन्या स्यात्, अर्थाभिव्यक्तित्वाद्वाग् न कुर्यात्। सा च कुरुते। तस्मान्नान्या नानन्या॥

पुनरपि महामतिराह–किं पुनर्भगवन् वचनमेव परमार्थः, उत यद्वचनेनाभिलप्यते स परमार्थः ? भगवानाह–न महामते वचनं परमार्थः, न च यद्वचनेनाभिलप्यते स परमार्थः । तत्कस्य हेतोः ? यदुत परमार्थार्यसुखाभिलापप्रवेशित्वात्परमार्थस्य वचनं न परमार्थः । परमार्थस्तु महामते आर्यज्ञानप्रत्यात्मगतिगम्यो न वाग्विकल्पबुद्धिगोचरः । तेन विकल्पो नोद्भावयति परमार्थम् । वचनं पुनर्महामते उत्पन्नप्रध्वंसि चपलं परस्परप्रत्ययहेतुसमुत्पन्नम् । यच्च महामते परस्परप्रत्ययहेतुसमुत्पन्नं तत्परमार्थं नोद्भावयति । स्वपरलक्षणाभावान्महामते बाह्यलक्षणं नोद्भावयति ॥

पुनरपरं महामते स्वचित्तदृश्यमात्रानुसारित्वाद्विविधविचित्रलक्षणबाह्यभावाभावाद्वा- N 88
ग्विकल्पः परमार्थं न विकल्पयति । तस्मात्तर्हि महामते वाग्विचित्रविकल्परहितेन ते भवितव्यम् ॥

तत्रेदमुच्यते–

सर्वभावोऽस्वभावो हि सद्वचनं तथाप्यसत् ।
शून्यताशून्यतार्थं वा बालोऽपश्यन् विधावति ॥ १४३ ॥
सर्वभावस्वभावा च वचनमपि नृणाम् ।
कल्पना सापि नास्ति निर्वाणं स्वप्नतुल्यम् ।
भवं परीक्षेत न संसारे नापि निर्वायात् ॥ १४४ ॥
राजा श्रेष्ठी यथा पुत्रान् विचित्रैर्मृन्मयैर्मृगैः ।
प्रलोभ्य क्रीडयित्वा च भूतान् दद्यात्ततो मृगान् ॥ १४५ ॥
तथाहं लक्षणैश्चित्रैर्धर्माणां प्रतिबिम्बकैः ।
प्रत्यात्मवेद्यां पुत्रेभ्यो भूतकोटिं वदाम्यहम् ॥ १४६ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्–देशयतु मे N 89
भगवान् नास्त्यस्तित्वैकत्वान्यत्वोभयनोभयनैवास्तिननास्तिनित्यानित्यवर्जितं सर्वतीर्थ्यागतिप्रचारमार्यप्रत्यात्मज्ञानगतिगम्यं परिकल्पितस्वसामान्यलक्षणविनिवृत्तं परमार्थतत्त्वावतारं भूम्यनुसंधिक्रमोत्तरोत्तरविशुद्धिलक्षणं तथागतभूम्यनुप्रवेशलक्षणमनाभोगपूर्वप्रणिधानविश्वरूपमणिसदृशविषयानन्तलक्षणप्रचारं स्वचित्तदृश्यगोचरगतिविभागलक्षणं सर्वधर्माणाम् । यथा च अहं च अन्ये च बोधिसत्त्वा महासत्त्वा एवमादिषु परिकल्पितस्वभावस्वसामान्यलक्षणविनिवृत्तदृष्टयः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्य सर्वसत्त्वानां सर्वगुणसंपत्तीः परिपूरयेम ॥

भगवानाह–साधु साधु महामते, साधु खलु पुनस्त्वं महामते, यत्त्वमेतमर्थमध्येषितव्यं मन्यसे । बहुजनहिताय त्वं महामते प्रतिपन्नो बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । तेन हि महामते शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः

---

१ This stanza is faulty.

N 90 प्रत्यश्रौषीत्। भगवांस्तस्यैतदवोचत्—स्वचित्तदृश्यमात्रानवबोधान्महामते बालपृथग्जना बाह्यविचित्रभावाभिनिवेशेन च नास्त्यस्तित्वैकत्वान्यत्वोभयनैवास्तिननास्तिनित्यानित्यस्वभाववासनाहेतुविकल्पाभिनिवेशेन विकल्पयन्ति। तद्यथा महामते मृगतृष्णोदकं मृगा उदकभावेन विकल्प्य ग्रीष्माभितप्ताः पातुकामतया प्रधावन्ति, स्वचित्तदृष्टिभ्रान्त्यनवबोधान्न प्रजानन्ति—नात्रोदकमिति, एवमेव महामते बालपृथग्जना अनादिकालविविधप्रपञ्चविकल्पवासितमतयो रागद्वेषमोहाग्नितापितमनसो विचित्ररूपविषयाभिलाषिणः उत्पादभङ्गस्थितिदृष्ट्याशया आध्यात्मिकबाह्यभावाभावाकुशलाः। ते एकत्वान्यत्वनास्त्यस्तित्वग्राहे प्रपतन्ति। तद्यथा महामते गन्धर्वनगरेऽविदुषामनगरे नगरसंज्ञा भवति। सा च नगराकृतिरनादिकालनगरबीजवासनाभिनिवेशात्ख्याति। तच्च नगरं नानगरं न नगरम्। एवमेव महामते अनादिकालतीर्थ्यप्रपञ्चवादवासनाभिनिविष्टाः एकत्वान्यत्वास्तित्वनास्तित्ववादानभिनिविशन्ते स्वचित्तदृश्यमात्रानवधारितमतयः। तद्यथा महामते कश्चिदेव पुरुषः शयितः स्वप्नान्तरे
N 91 स्त्रीपुरुषहस्त्यश्वरथपदातिग्रामनगरनिगमगोमहिषवनोद्यानविविधगिरिनदीतडागोपशोभितं जनपदमन्तःपुरं प्रविश्य प्रतिविबुध्येत। स प्रतिविबुद्धः संस्तदेव जनपदमन्तःपुरं समनुस्मरेत्। तत्किं मन्यसे महामते—अपि नु स पुरुषः पण्डितजातीयो भवेत्, यस्तद्भूतं स्वप्नवैचित्र्यमनुस्मरेत्? आह—नो हीदं भगवन्। भगवानाह—एवमेव महामते बालपृथग्जनाः कुदृष्टिदृष्टास्[1]तीर्थ्यमतयः स्वप्नतुल्यात्स्वचित्तदृश्यभावान्न प्रतिविजानन्ते, एकत्वान्यत्वनास्त्यस्तित्वदृष्टिं समाश्रयन्ते। तद्यथा महामते चित्रकरकृतप्रदेशा अनिम्नोन्नताः सन्तो निम्नोन्नता बालैः कल्प्यन्ते, एवमेव महामते भविष्यन्त्यनागतेऽध्वनि तीर्थ्यदृष्टिवासनाशयप्रतिविकल्पपुष्टाः। ते एकत्वान्यत्वोभयानुभयवादाभिनिविष्टाः स्वयं नष्टा अन्यानपि सदसत्पक्षविविक्तानुत्पादवादिनो नास्तिका इति वक्ष्यन्ति। एते हेतुफलापवादिनो दुर्दर्शनोन्मूलितहेतुकुशलशुक्लपक्षाः।
N 92 एते श्रेयोर्थिभिर्दूरतः परिवर्ज्या इति वक्ष्यन्ते। ते च स्वपरोभयदृष्टिपतिताशया नास्त्यस्तित्वविकल्पसमारोपापवादकुदृष्टिपतिताशया नरकपरायणा भविष्यन्ति। तद्यथा महामते तैमिरिकाः केशोण्डुकं दृष्ट्वा परस्परमाचक्षते—इदं चित्रमिदं चित्रमिति पश्यन्तु भो मार्षाः। तच्च केशोण्डुकमुभयानुत्पन्नतया[2] न भावो नाभावो दर्शनादर्शनतः। एवमेव महामते तीर्थ्यकुदृष्टिविकल्पाशयाभिनिविष्टाः सदसत्पक्षैकत्वान्यत्वोभयानुभयत्ववादाभिनिविष्टाः सद्धर्मापवादका आत्मानं परांश्च विनिपातयिष्यन्ति। तद्यथा महामते अचक्रमलातचक्रं बालैश्चक्रभावेन परिकल्प्यते न पण्डितैः, एवमेव महामते कुदृष्टितीर्थ्याशयपतिता एकत्वान्यत्वोभयानुभयत्वं परिकल्पयिष्यन्ति सर्वभावोत्पत्तौ। तद्यथा महामते देवे प्रवर्षति जलबुद्बुदकाः स्फटिकमणिसदृशाः ख्यायन्ते। तत्र च बालाः स्फटिकमणिभावमभिनिवेश्य प्रधावन्ति। ते च महामते उदकबुद्बुदका न मणयो नामणयो ग्रहणाग्रहणतः। एवमेव महामते तीर्थ्यदृष्टिविकल्पाशयवासनावासिता असतश्चोत्पादं वर्णयिष्यन्ति प्रत्ययैः, सतश्च विनाशम्॥

---

१ N कुदृष्टिदृष्टाः for °दृष्टाः which is supported by T. २ N अभयानुत्पन्नतया.

पुनरपरं महामते प्रमाणत्रयावयवप्रत्यवस्थानं कृत्वा आर्यज्ञानप्रत्यात्माधिगम्यं स्वभाव- N 93
द्वयविनिर्मुक्तं वस्तु स्वभावतो विद्यत इति विकल्पयिष्यन्ति । न च महामते चित्तमनो-
मनोविज्ञानचित्तपरावृत्त्याश्रयाणां स्वचित्तदृश्यग्राह्यग्राहकविकल्पप्रहीणानां तथागतभूमि-
प्रत्यात्मार्यज्ञानगतानां योगिनां भावाभावसंज्ञा प्रवर्तते । यदि पुनर्महामते योगिनामेवंगति-
विषयाणां भावाभावग्राहः प्रवर्तते, स एवैषामात्मग्राहः पोषग्राहः पुरुषग्राहः पुद्गलग्राहः
स्यात् । या पुनरेवं महामते भावस्वभावस्वसामान्यलक्षणदेशना, एषा महामते नैर्माणिक-
बुद्धदेशना, न धर्मताबुद्धदेशना । देशना पुनर्महामते बालाशयगतदृष्टिप्रवृत्ता, न च
प्रत्यवस्थानगतिस्वभावधर्मार्यज्ञानप्रत्यात्माधिगमसमाधिसुखविहारमुद्भावयति । तद्यथा महामते
जलान्तर्गता वृक्षच्छाया ख्यायते । सा च न च्छाया नाच्छाया वृक्षसंस्थानासंस्थानतः, एवमेव
महामते तीर्थ्यदृष्टिवासनावासितविकल्पा एकत्वान्यत्वोभयत्वानुभयत्वनास्त्यस्तित्वं विकल्पयि-
ष्यन्ति स्वचित्तदृश्यमात्रानवधारितमतयः । तद्यथा महामते दर्पणान्तर्गतानि सर्वरूप-
प्रतिबिम्बकानि ख्यायन्ते यथाप्रत्ययतः स्वविकल्पनाच्च, न तानि बिम्बानि नाबिम्बानि
बिम्बाबिम्बदर्शनतः । अथ च ते महामते स्वचित्तदृश्यविकल्पाः ख्यायन्ते बालानां N 94
बिम्बाकृतयः । एवमेव महामते स्वचित्तप्रतिबिम्बानि ख्यायन्ते एकत्वान्यत्वोभयानुभय-
दृष्ट्याकारेण । तद्यथा महामते प्रतिश्रुत्का पुरुषनदीपवनसंयोगात्प्रवर्तमाना अनुश्रूयते ।
सा च न भावा नाभावा घोषाघोषश्रवणतः, एवमेव महामते नास्त्यस्तित्वैकत्वान्यत्वोभय-
नोभयदृष्टिस्वचित्तवासनाविकल्पाः ख्यायन्ते। तद्यथा महामते निस्तृणगुल्मलतावनायां मेदिन्या-
मादित्यसंयोगान्मृगतृष्णिकास्तरंगवत्स्यन्दन्ते । ते च न भावा नाभावा लोभ्यालोभ्यतः[1] ।
एवमेव महामते बालानामनादिकालप्रपञ्चदौष्ठुल्यवासनावासितं विकल्पविज्ञानमुत्पादस्थिति-
भङ्गैकत्वान्यत्वोभयानुभयनास्त्यस्त्यार्यप्रत्यात्मज्ञानवस्तुमुखेन मृगतृष्णिकावत्तरंगायते । तद्यथा
महामते वेतालयन्त्रपुरुषौ निःसत्त्वौ पिशाचयुक्तियोगात्स्पन्दनक्रियां कुर्वाते । तत्र च अस-
द्विकल्पे बाला अभिनिविशन्ते गमनागमनतः । एवमेव महामते बालपृथग्जनाः कुदृष्टि- N 95
तीर्थ्याशयपतिता एकत्वान्यत्ववादानभिनिविशन्ते । स च असद्भूतसमारोपः । तस्मात्तर्हि
महामते उत्पादस्थितिभङ्गैकत्वान्यत्वोभयानुभयनास्त्यस्त्यार्यप्रत्यात्मवस्त्वधिगमविकल्परहितेन
भवितव्यम् ॥

तत्रेदमुच्यते—

[2]जलवृक्षच्छायासदृशाः स्कन्धा विज्ञानपञ्चमाः ।
मायास्वप्नोपमादृशा(श्या ?) विज्ञप्त्या मा विकल्पयते ॥ १४७ ॥
केशोण्डुकप्रख्यमिदं मरीच्युदकविभ्रमत् ।
त्रिभवं स्वप्नमायाख्यं विभावेन्तो विमुच्यते ॥ १४८ ॥

---

१ T लोभालोभतः; perhaps लाभालाभतः might have been the original reading. २ This stanza is somewhat corrupt.

मृगतृष्णा यथा ग्रीष्मे स्पन्दते चित्तमोहनी ।
मृगा गृह्णन्ति पानीयं न चास्यां वस्तु विद्यते ॥ १४९ ॥
तथा विज्ञानबीजं हि स्पन्दते दृष्टिगोचरे ।
बाला गृह्णन्ति जायन्तं तिमिरं तैमिरा यथा ॥ १५० ॥
अनादिगतिसंसारे भावग्राहोपगूहितम् ।
बालः[1] कीले यथा कीलं प्रलोभ्य विनिवर्तयेत् ॥ १५१ ॥
मायावेतालयन्त्राभं स्वप्नविद्युद्घनं सदा ।
N 96 त्रिसंततिव्यवच्छिन्नं जगत्पश्य( न् ? ) विमुच्यते ॥ १५२ ॥
न ह्यत्र काचिद्विज्ञप्तिर्मरीचीनां यथा नभे ।
एवं धर्मान् विजानन्तो न किंचित्प्रतिजानते ॥ १५३ ॥
विज्ञप्तिर्नाममात्रेयं लक्षणेन न विद्यते ।
स्कन्धाः केशोण्डुकाकारा यत्र चासौ विकल्प्यते ॥ १५४ ॥
चित्तं केशोण्डुकं माया स्वप्न गन्धर्वमेव च ।
अलातं मृगतृष्णा च असन्तः ख्याति वै नृणाम् ॥ १५५ ॥
नित्यानित्यं तथैकत्वमुभयं नोभयं तथा ।
अनादिदोषसंबन्धाद् बालाः कल्पन्ति मोहिताः ॥ १५६ ॥
दर्पणे उदके नेत्रे भाण्डेषु च मणीषु च ।
बिम्बं हि दृश्यते तेषु बिम्बं नास्ति च कुत्रचिद् ॥ १५७ ॥
भावाभासं तथा चित्तं मृगतृष्णा यथा नभे ।
दृश्यते चित्ररूपेण स्वप्ने वन्ध्यौरसो यथा ॥ १५८ ॥

पुनरपरं महामते चतुष्टयविनिर्मुक्ता तथागतानां धर्मदेशना, यदुत एकत्वान्यत्वोभयानुभयपक्षविवर्जिता नास्त्यस्तिसमारोपापवादविनिर्मुक्ता । असत्यप्रतीत्यसमुत्पादनिरोधमार्गविमोक्षप्रवृत्तिपूर्वका महामते तथागतानां धर्मदेशना । न प्रकृतीश्वर[2]हेतुयदृच्छाणुकाल-
N 97 स्वभावोपनिबद्धा महामते तथागतानां धर्मदेशना ॥

पुनरपरं महामते क्लेशज्ञेयावरणद्वयविशुद्ध्यर्थं सार्थवाहवदानुपूर्व्या अष्टोत्तरे निराभासपदशते प्रतिष्ठापयन्ति यानभूम्यङ्गसुविभागलक्षणे च ॥

पुनरपरं महामते चतुर्विधं ध्यानम् । कतमच्चतुर्विधम् ? यदुत बालोपचारिकं ध्यानम्, अर्थप्रविचयं ध्यानम्, तथतालम्बनं ध्यानम्, ताथागतं चतुर्थं ध्यानम् । तत्र महामते बालोपचारिकं ध्यानं कतमत् ? यदुत श्रावकप्रत्येकबुद्धयोगयोगिनां पुद्गलनैरात्म्यभावस्वसामान्यबिम्बसंकला[3]नित्यदुःखाशुभलक्षणाभिनिवेशपूर्वकम्, एवमिदं लक्षणं नान्यथेति

१ बालः क्रीडेयथा क्रीडां seems to be the original reading. २ N °ईश्वराहेतु° against Mss. ३ C and T suggest कङ्काल for संकला°.

पश्यतः पूर्वोत्तरोत्तरत आ संज्ञानिरोधाद्बालोपचारिकं भवति । तत्र अर्थप्रविचयध्यानं पुनर्महामते कतमत्? यदुत पुद्गलनैरात्म्यस्वसामान्यलक्षणबाह्यतीर्थकरस्वपरोभयाभावं कृत्वा धर्मनैरात्म्यभूमिलक्षणार्थं प्रविचयानुपूर्वकमर्थप्रविचयध्यानं भवति । तत्र तथतालम्बनं ध्यानं महामते कतमत्? यदुत परिकल्पितनैरात्म्यद्वयविकल्पयथाभूतावस्थानादप्रवृत्तेर्विकल्पस्य तथतालम्बनमिति वदामि । ताथागतं पुनर्महामते ध्यानं कतमत्? यदुत ताथागतभूम्या- N 98 कारप्रवेशं प्रत्यात्मार्यज्ञानलक्षणत्रयसुखविहाराचिन्त्यसत्त्वकृत्यकरणतया ताथागतं ध्यानमिति वदामि ॥

तत्रेदमुच्यते—

अर्थप्रविचयं ध्यानं ध्यानं बालोपचारिकम् ।
तथतालम्बनं ध्यानं ध्यानं ताथागतं शुभम् ॥ १५९ ॥
सोमभास्करसंस्थानं पद्मपातालसादृशम् ।
गगनाग्निचित्रसदृशं योगी युञ्जन्[1] प्रपश्यति ॥ १६० ॥
निमित्तानि च चित्राणि तीर्थमार्गं नयन्ति ते ।
श्रावकत्वे निपातन्ति प्रत्येकजिनगोचरे ॥ १६१ ॥
विधूय सर्वाण्येतानि निराभासं यदा भवेत् ।
तदा बुद्धकरादित्याः सर्वक्षेत्राः समागताः ।
शिरो हि तस्य मार्जन्ति निमित्तं तथतानुगम् ॥ १६२ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—निर्वाणं निर्वाणमिति भगवन्नुच्यते । कस्यैतद्भगवन्नधिवचनं यदुत निर्वाणमिति? भगवानाह—सर्वविज्ञानस्वभाववासनालयमनोमनोविज्ञानदृष्टिवासनापरावृत्तिर्निर्वाणमित्युच्यते सर्वबुद्धैर्मया च निर्वाणगतिस्वभावशून्यतावस्तुगोचरम् ॥

पुनरपरं महामते निर्वाणमार्यज्ञानप्रत्यात्मगतिगोचरं शाश्वतोच्छेदविकल्पभावाभाव- N 99 विवर्जितम् । कथं न शाश्वतम्? यदुत स्वसामान्यलक्षणविकल्पप्रहीणम्, अतो न शाश्वतम् । तत्रानुच्छेदो यदुत सर्वार्या अतीतानागतप्रत्युत्पन्नाः प्रत्यात्ममपि गच्छन्ति, अतो नोच्छेदः ॥

पुनर्महामते महापरिनिर्वाणं न नाशो न मरणम् । यदि पुनर्महामते महापरिनिर्वाणं मरणं स्यात्, पुनरपि जन्मप्रबन्धः स्यात् । अथ विनाशः स्यात्, संस्कृतलक्षणपतितं स्यात् । अत एतस्मात्कारणान्महामते महापरिनिर्वाणं न नाशं न मरणम् । च्युतिविगतं मरणमधिगच्छन्ति योगिनः । पुनरपरं महामते महापरिनिर्वाणमप्रहीणासंप्राप्तितोऽनुच्छेदाशाश्वततो नैकार्थतो नानार्थतो निर्वाणमित्युच्यते ॥

---

१ N पुञ्जात् for युञ्जन् which is based upon C and T.

पुनरपरं महामते श्रावकप्रत्येकबुद्धानां निर्वाणं स्वसामान्यलक्षणावबोधादसंसर्गतः। विषयाविपर्यासदर्शनाद्विकल्पो न प्रवर्तते। ततस्तेषां तत्र निर्वाणबुद्धिर्भवति॥

N 100 पुनरपरं महामते द्विप्रकारं स्वभावद्वयलक्षणं भवति। कतमत् द्विप्रकारम्? यदुत अभिलापस्वभावाभिनिवेशतश्च वस्तुस्वभावाभिनिवेशतश्च। तत्र महामते अभिलापस्वभावाभिनिवेशोऽनादिकालवाक्प्रपञ्चवासनाभिनिवेशात्प्रवर्तते। तत्र वस्तुस्वभावाभिनिवेशः पुनर्महामते स्वचित्तदृश्यमात्रानवबोधात्प्रवर्तते॥

पुनरपरं महामते अधिष्ठानद्वयाधिष्ठिता बोधिसत्त्वास्तथागतानामर्हतां सम्यक्संबुद्धानां चरणयोर्निपत्य प्रश्नान् परिपृच्छन्ति। कतमेनाधिष्ठानद्वयेनाधिष्ठिताः? यदुत समाधिसमापत्त्यधिष्ठानेन सर्वकायमुखपाण्यभिषेकाधिष्ठानेन च। तत्र महामते बोधिसत्त्वा महासत्त्वाः प्रथमायां भूमौ बुद्धाधिष्ठानाधिष्ठिता महायानप्रभासं नाम बोधिसत्त्वसमाधिं समापद्यन्ते। समनन्तरसमापन्नानां च तेषां बोधिसत्त्वानां महासत्त्वानां महायानप्रभासं बोधिसत्त्वसमाधिम्, अथ दशदिग्लोकधातुव्यवस्थितास्तथागता अर्हन्तः सम्यक्संबुद्धा मुखान्युपदर्श्य सर्वकायमुखवाचासंदर्शनेनाधिष्ठानं कुर्वन्ति। यथा महामते वज्रगर्भस्य बोधिसत्त्वस्य
N 101 महासत्त्वस्य अन्येषां च तादृग्लक्षणगुणसमन्वागतानां बोधिसत्त्वानां महासत्त्वानाम्, एवं महामते प्रथमायां भूमौ बोधिसत्त्वा महासत्त्वाः समाधिसमापत्त्यधिष्ठानं प्रतिलभन्ते। कल्पशतसहस्रं संचितैः कुशलमूलैरनुपूर्वेण भूमिपक्षविपक्षलक्षणगतिंगता धर्ममेघायां बोधिसत्त्वभूमौ महापद्मविमानासनस्थस्य बोधिसत्त्वस्य महासत्त्वस्य तदनुरूपैर्बोधिसत्त्वैर्महासत्त्वैः परिवृतस्य सर्वरत्नाभरणविभूषितकिरीटस्य हरितालकनकचम्पकचन्द्रांशुमयूखपद्मसदृशा दशदिग्लोकधात्वागता जिनकरास्तस्य बोधिसत्त्वस्य महासत्त्वस्य पद्मविमानासनस्थस्य मूर्धन्यभिषिञ्चन्ति वशवर्तिचक्रवर्तीन्द्रराजवत्सर्वकायमुखपाण्यभिषेकेन। स च बोधिसत्त्वस्ते च बोधिसत्त्वाः पाण्यभिषेकाधिष्ठानाधिष्ठिता इत्युच्यन्ते। एतन्महामते बोधिसत्त्वानां महासत्त्वानामधिष्ठानद्वयम्, येनाधिष्ठानद्वयेनाधिष्ठिता बोधिसत्त्वा महासत्त्वाः सर्वबुद्धमुखान्यवलोकयन्ति। अन्यत्राव्यवलोक्यास्तथागता अर्हन्तः सम्यक्संबुद्धाः॥

N 102 पुनरपरं महामते यत्किंचिद्बोधिसत्त्वानां महासत्त्वानां प्रतिभाति समाध्यृद्धिदेशनाकारेण, तत्सर्वबुद्धाधिष्ठानद्वयाधिष्ठितानाम्। यदि पुनर्महामते बोधिसत्त्वानां महासत्त्वानामधिष्ठानमन्तरेण प्रतिभानं प्रतिभायात्, बालपृथग्जनानामपि महामते प्रतिभानं प्रतिभायात्। तत्कस्य हेतोः? यदुत अधिष्ठानानधिष्ठितत्वात्। तृणगुल्मवृक्षपर्वता अपि महामते विविधानि च वाद्यभाण्डानि नगरभवनगृहविमानासनस्थानानि तथागतप्रवेशाधिष्ठानेन प्रवाद्यन्ते। किं पुनर्महामते सचेतना मूकान्धबधिरा अपि महामते स्वदोषेभ्यो विमुच्यन्ते। एवं महागुणविशेषं महामते तथागताधिष्ठानम्॥

पुनरपरं महामतिराह—किं पुनर्भगवंस्तथागता अर्हन्तः सम्यक्संबुद्धा बोधिसत्त्वानां महासत्त्वानां समाधिसमापत्त्यवस्थानकाले विशेषभूमौ च अभिषेकाधिष्ठानं प्रकुर्वन्ति?

भगवानाह–मारकर्मक्लेशवियुक्तार्थं श्रावकध्यानभूम्यप्रपतनतया च तथागतभूमिप्रत्यात्माधिगमनतया च प्राप्तधर्माधिगमविवृद्धये च। एतेन महामते कारणेन तथागता अर्हन्तः सम्यक्संबुद्धा बोधिसत्त्वानां महासत्त्वानामधिष्ठानैरधितिष्ठन्ति। अनधिष्ठिताश्च महामते बोधिसत्त्वा महासत्त्वाः कुतीर्थ्यश्रावकमाराशयपतिता नानुत्तरां सम्यक्संबोधिमभिसंबुध्येरन्। N 103
अतस्तेन कारणेन बोधिसत्त्वा महासत्त्वास्तथागतैरर्हद्भिः सम्यक्संबुद्धैरनुगृह्यन्ते॥

तत्रेदमुच्यते–

अधिष्ठानं नरेन्द्राणां प्रणिधानैर्विशोधितम्।
अभिषेकसमाध्याद्याः प्रथमाद्दशमाय वै॥ १६३॥

अथ खलु महामतिर्बोधिसत्त्वः पुनरपि भगवन्तमेतदवोचत्–प्रतीत्यसमुत्पादं पुनर्भगवता देशयता कारणव्यपदेश एव कृतो न स्वनयप्रकृत्यवस्थानकथा। तीर्थकरा अपि भगवन् कारणत उत्पत्तिं वर्णयन्ति, यदुत प्रधानेश्वरपुरुषकालाणुप्रत्ययेभ्यो भावानामुत्पत्तयः। किं तु भगवता प्रत्ययपर्यायान्तरेणोत्पत्तिर्वर्ण्यते भावानाम्। न च सिद्धान्तविशेषान्तरम्। सदसतो हि भगवंस्तीर्थकरा अप्युत्पत्तिं वर्णयन्ति, भूत्वा च विनाशं प्रत्ययैर्भावानाम्। यदप्युक्तं भगवता–अविद्याप्रत्ययाः संस्कारा यावज्जरामरणमिति, अहेतुवादव्यपदेश एष भगवतानुवर्णितः, न स हेतुवादः। युगपद्व्यवस्थितानां भगवन्नेतद्भवति–अस्मिन् सतीदं N 104
भवतीति, न क्रमवृत्त्यपेक्षावस्थितानाम्। किं तु तीर्थकरव्यपदेश एव भगवन् विशिष्यते न त्वदीयम्। तत्कस्य हेतोः? तीर्थकराणां हि भगवन् कारणमप्रतीत्यसमुत्पन्नं कार्यमभिनिर्वर्तयति। तव तु भगवन् कारणमपि कार्यापेक्षं कार्यमपि कारणापेक्षम्। हेतुप्रत्ययसंकरश्च एवमन्योन्यानवस्था प्रसज्यते। अहेतुत्वं च भगवन् लोकस्य–अस्मिन् सतीदं ब्रुवतः। भगवानाह–न महामते ममाहेतुकक्कारणवादो हेतुप्रत्ययसंकरश्च प्रसज्यते–अस्मिन् सतीदं ब्रुवतः, ग्राह्यग्राहकाभावात्, स्वचित्तदृश्यमात्रावबोधात्। ये तु महामते ग्राह्यग्राहकाभिनिविष्टाः स्वचित्तदृश्यमात्रं नावबुध्यन्ते बाह्यस्वविषयभावाभावत्वेन, तेषां महामते एष दोषः प्रसज्यते, न तु मम प्रतीत्यकारणव्यपदेशं कुर्वतः॥

पुनरपरं महामतिराह–ननु भगवन् अभिलापसद्भावात्सन्ति सर्वभावाः। यदि पुनर्भगवन् भावा न स्युः, अभिलापो न प्रवर्तते। [1]प्रवर्तते च। तस्मादभिलापसद्भावाद्भगवन् सन्ति सर्वभावाः। भगवानाह–असतामपि महामते भावानामभिलापः क्रियते। यदुत शशविषाणकूर्मरोमवन्ध्यापुत्रादीनां लोके दृष्टोऽभिलापः। ते च महामते न भावा N 105
नाभावाः, [2]अभिलप्यन्ते च। तद्यदवोचस्त्वं महामते–अभिलापसद्भावात्सन्ति सर्वभावा इति, स हि वादः प्रहीणः। न च महामते सर्वबुद्धक्षेत्रेषु प्रसिद्धोऽभिलापः। अभिलापो महामते कृतकः। क्वचिन्महामते बुद्धक्षेत्रेऽनिमिषप्रेक्षया धर्मो देश्यते, क्वचिदिङ्गितैः, क्वचिद्भ्रूविक्षेपेण, क्वचिन्नेत्रसंचारेण, क्वचिदास्येन, क्वचिद्विजृम्भितेन, क्वचिदुत्कासनशब्देन,

---

१ N om. प्रवर्तते, though C reads it. २ N अभिलाप्यन्ते.

क्वचित्क्षेत्रस्मृत्या, क्वचित्स्पन्दितेन। यथा महामते अनिमिषायां गन्धसुगन्धायां च लोक-
धातौ समन्तभद्रस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बुद्धक्षेत्रे अनिमिषैर्नेत्रैः प्रेक्षमाणास्ते
बोधिसत्त्वा महासत्त्वा अनुत्पत्तिकधर्मक्षान्तिं प्रतिलभन्ते अन्यांश्च समाधिविशेषान्, अत
एवास्मात्कारणान्महामते नाभिलापसद्भावात्सन्ति सर्वभावाः। दृष्टं चैतन्महामते। इह लोके
कृमिमक्षिकैवमाद्याः सत्त्वविशेषा अनभिलापेनैव स्वकृत्यं कुर्वन्ति॥

तत्रेदमुच्यते—

आकाशं शशशृङ्गं च वन्ध्यायाः पुत्र एव च।
असन्तो ह्यभिलप्यन्ते तथा भावेषु कल्पना॥ १६४॥
हेतुप्रत्ययसामग्र्यां बालाः कल्पन्ति संभवम्।
अजानाना नयमिदं भ्रमन्ति त्रिभवालये॥ १६५॥

N 106 अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—नित्यशब्दः
पुनर्भगवन् क्वाभिहितः? भगवानाह—भ्रान्तौ महामते। यस्मादियं भ्रान्तिरार्याणामपि
ख्यायते विपर्यासतः[1]। तद्यथा महामते मृगतृष्णालातचक्रकेशोण्डुकगन्धर्वनगरमायास्वप्नप्रति-
बिम्बाक्षपुरुषा लोकेऽविद्वद्भिर्विपर्यस्यन्ते, न तु विद्वद्भिः। न च पुनर्न ख्यायन्ते। सा
पुनर्भ्रान्तिर्महामते अनेकप्रकारा ख्यायात्। न भ्रान्तेरशाश्वततां कुरुते। तत्कस्य हेतोः?
यदुत भावाभावविवर्जितत्वात्। कथं पुनर्महामते भावाभावविवर्जिता भ्रान्तिः? यदुत
सर्वबालविचित्रगोचरत्वात्समुद्रतरंगगङ्गोदकवत्प्रेतानां दर्शनादर्शनतः। अत एतस्मात्कारणा-
न्महामते भ्रान्तिभावो न भवति। यस्माच्च तदुदकमन्येषां ख्यायते, अतो ह्यभावो न भवति।
एवं भ्रान्तिरार्याणां विपर्यासाविपर्यासवर्जिता। अतश्च महामते अस्मात्कारणाच्छाश्वता
भ्रान्तिर्यदुत निमित्तलक्षणाभेदत्वात्। न हि महामते भ्रान्तिर्विविधविचित्रनिमित्तविकल्पेन
N 107 विकल्प्यमाना भेदमुपयाति। अत एतस्मात्कारणान्महामते भ्रान्तिः शाश्वता॥

कथं पुनर्महामते भ्रान्तिस्तत्त्वं भवति? येन पुनः कारणेन महामते आर्याणामस्यां
भ्रान्तौ विपर्यासबुद्धिर्न प्रवर्तते, नाविपर्यासबुद्धिः। नान्यत्र महामते आर्या अस्यां भ्रान्तौ
यत्किंचित्संज्ञिनो भवन्ति नार्यज्ञानवस्तुसंज्ञिनः। यत्किंचिदिति महामते बालप्रलाप एष
नार्यप्रलापः। सा पुनर्भ्रान्तिर्विपर्यासाविपर्यासेन विकल्प्यमाना गोत्रद्वयावहा भवति यदुत
आर्यगोत्रस्य वा बालपृथग्जनगोत्रस्य वा। आर्यगोत्रं पुनर्महामते त्रिप्रकारमुपयाति यदुत
श्रावकप्रत्येकबुद्धबुद्धप्रभेदतः। तत्र कथं पुनर्महामते बालैर्भ्रान्तिर्विकल्प्यमाना श्रावकयानगोत्रं
जनयति? यदुत महामते स्वसामान्यलक्षणाभिनिवेशेनाभिनिविश्यमाना श्रावकयानगोत्राय
संवर्तते। एवं महामते सा भ्रान्तिः श्रावकयानगोत्रावहा भवति। तत्र कथं पुनर्महामते
सैव भ्रान्तिर्विकल्प्यमाना प्रत्येकबुद्धयानगोत्रावहा भवति? यदुत तस्या एव महामते
N 108 भ्रान्तेः स्वसामान्यलक्षणाभिनिवेशासंसर्गतः प्रत्येकबुद्धयानगोत्रावहा भवति। तत्र कथं

१ N अविपर्यासतः.

पुनर्महामते पण्डितैः सैव भ्रान्तिर्विकल्प्यमाना बुद्धयानगोत्रावहा भवति ? यदुत महामते स्वचित्तदृश्यमात्रावबोधाद्बाह्यभावाभावविकल्पनतया विकल्प्यमाना बुद्धयानगोत्रावहा भवति । अत एव[१] महामते गोत्रम् । एष गोत्रार्थः । विचित्रवस्तुभावना पुनर्महामते बालैर्भ्रान्तिर्विकल्प्यमाना संसारयानगोत्रावहा भवति, एवमिदं नान्यथेति । अत एतस्मात्कारणान्महामते भ्रान्तिर्विचित्रवस्तुत्वेन कल्प्यते बालैः । सा च न वस्तु, नावस्तु । सैव महामते भ्रान्तिरविकल्प्यमाना आर्याणां चित्तमनोमनोविज्ञानदौष्ठुल्यवासनास्वभावधर्मपरावृत्तिभावाद्भ्रान्तिरार्याणां तथतेत्युच्यते । अत एतदुक्तं भवति महामते–तथतापि चित्तविनिर्मुक्तेति । अस्यैव महामते पदस्याभिद्योतनार्थमिदमुक्तं मया–कल्पनैश्च विवर्जितं सर्वकल्पनाविरहितमिति यावदुक्तं भवति ॥

महामतिराह–भ्रान्तिर्भगवन् विद्यते नेति ? भगवानाह–मायावन्महामते न लक्षणाभिनिवेशतो भ्रान्तिर्विद्यते । यदि पुनर्महामते भ्रान्तिर्लक्षणाभिनिवेशेन विद्यते, अव्यावृत्त N 109
एव महामते भावाभिनिवेशः स्यात् । प्रतीत्यसमुत्पादवत्तीर्थकरकारणोत्पादवदेतत्स्यान्महामते । महामतिराह–यदि भगवन् मायाप्रख्या भ्रान्तिः, तेनान्यस्या भ्रान्तेः कारणीभविष्यति । भगवानाह–न महामते माया भ्रान्तिकारणम् । अदौष्ठुल्यदोषावहत्वान्न हि महामते माया दौष्ठुल्यदोषमावहति । अविकल्प्यमाना माया पुनर्महामते परपुरुषविद्याधिष्ठानात्प्रवर्तते, न स्वविकल्पदौष्ठुल्यवासनाधिष्ठानतः । सा न दोषावहा भवति । चित्तदृष्टिमोहमात्रमेतन्महामते बालानां यत्किंचिदभिनिवेशतो न त्वार्याणाम् ॥

तत्रेदमुच्यते–

आर्यो न पश्यति भ्रान्तिं नापि तत्त्वं तदन्तरे ।
भ्रान्तिरेव भवेत्तत्त्वं यस्मात्तत्त्वं तदन्तरे ॥ १६६ ॥
भ्रान्तिं विधूय सर्वां हि निमित्तं जायते यदि ।
सैव तस्य भवेद्भ्रान्तिरशुद्धं तिमिरं यथा ॥ १६७ ॥

पुनरपरं महामते न माया नास्ति । साधर्म्यदर्शनात्सर्वधर्माणां मायोपमत्वं भवति । महामतिराह–किं पुनर्भगवन् विचित्रमायाभिनिवेशलक्षणेन सर्वधर्माणां मायोपमत्वं भवति, N 110
अथ वितथाभिनिवेशलक्षणेन ? तद्यदि भगवन् विचित्रमायाभिनिवेशलक्षणेन सर्वधर्माणां मायोपमत्वं भवति, हन्त भगवन् न भावा मायोपमाः । तत्कस्य हेतोः ? यदुत रूपस्य विचित्रलक्षणाहेतुदर्शनात् । न हि भगवन् कश्चिद्धेतुरस्ति येन रूपं विचित्रलक्षणाकारं ख्यायते मायावत् । अत एतस्मात्कारणाद्भगवन् न विचित्रमायालक्षणाभिनिवेशसाधर्म्याद्भावा मायोपमाः ॥

भगवानाह–न महामते विचित्रमायालक्षणाभिनिवेशसाधर्म्यात्सर्वधर्मा मायोपमाः, किं तर्हि महामते वितथाशुविद्युत्सदृशसाधर्म्येण सर्वधर्मा मायोपमाः । तद्यथा महामते

१ N एवं; T एतत् for एव.

विद्युल्लता क्षणभङ्गदृष्टनष्टदर्शनं पुनर्बालानां ख्यायते, एवमेव महामते सर्वभावाः स्वविकल्पसामान्यलक्षणाः प्रविचयाभावान्न ख्यायन्ते रूपलक्षणाभिनिवेशतः ॥

तत्रेदमुच्यते–

न माया नास्ति साधर्म्याद्भावानां कथ्यतेऽस्तिता ।
वितथाशुविद्युत्सदृशास्तेन मायोपमाः स्मृताः ॥ १६८ ॥

N 111 पुनरपरं महामतिराह–यत्पुनरेतदुक्तं भगवता–अनुत्पन्नाः सर्वभावा मायोपमाश्चेति। ननु ते भगवन् एवं ब्रुवतः पूर्वोत्तरवचनव्याघातदोषः प्रसज्यते, अनुत्पादं भावानां मायोपमत्वेनाभिलपतः । भगवानाह–न महामते ममानुत्पादं भावानां मायोपमत्वेनाभिलपतः पूर्वोत्तरवचनव्याघातदोषो भवति । तत्कस्य हेतोः ? यदुत उत्पादानुत्पादस्वचित्तदृश्यमात्रावबोधात्सदसतोर्बाह्यभावाभावानुत्पत्तिदर्शनान्न महामते पूर्वोत्तरवचनव्याघातदोषः प्रसज्यते । किं तु महामते तीर्थकरकारणपक्षोत्पत्तिव्युदासार्थमिदमुच्यते–मायावदनुत्पन्नाः सर्वभावाः । तीर्थकरमोहवर्गा हि महामते सदसतोर्भावानामुत्पत्तिमिच्छन्ति न स्वविकल्पविचित्राभिनिवेशप्रत्ययतः । मम तु महामते न संत्रासमुत्पद्यते । अत एतस्मात्कारणान्महामते अनुत्पादाभिधानमेवाभिधीयते। भावोपदेशः पुनर्महामते संसारपरिग्रहार्थं च नास्तीत्युच्छेदनिवारणार्थं च । मच्छिष्याणां विचित्रकर्मोपपत्त्यायतनपरिग्रहार्थं भावशब्दपरिग्रहेण संसारपरिग्रहः क्रियते । मायाभावस्वभावलक्षणनिर्देशेन महामते भावस्वभावलक्षणव्यावृत्त्यर्थं
N 112 बालपृथग्जनानां कुदृष्टिलक्षणपतिताशयानां स्वचित्तदृश्यमात्रानवधारिणां हेतुप्रत्ययक्रियोत्पत्तिलक्षणाभिनिविष्टानां निवारणार्थं मायास्वप्नस्वभावलक्षणान् सर्वधर्मान् देशयामि। एते बालपृथग्जनाः कुदृष्टिलक्षणाशयाभिनिविष्टा आत्मानं परं च सर्वधर्मा यथाभूतावस्थानदर्शनाद्विसंवादयिष्यन्ति । तत्र यथाभूतावस्थानदर्शनं महामते सर्वधर्माणां यदुत स्वचित्तदृश्यमात्रावतारः ॥

तत्रेदमुच्यते–

अनुत्पादे कारणाभावो भावे संसारसंग्रहः ।
मायादिसदृशं पश्येल्लक्षणं न विकल्पयेत् ॥ १६९ ॥

पुनरपरं महामते नामपदव्यञ्जनकायानां लक्षणमुद्देक्ष्यामः, यैर्नामपदव्यञ्जनकायैः सूपलक्षितैर्बोधिसत्त्वा महासत्त्वा अर्थपदव्यञ्जनानुसारिणः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्य तथैव सर्वसत्त्वानवबोधयिष्यन्ति । तत्र महामते कायो नाम यदुत यद्वस्त्वाश्रित्य नाम क्रियते, स कायो वस्तु । कायः शरीरमित्यनर्थान्तरम् । एष महामते नामकायः । पदकायः पुनर्महामते यदुत पदार्थकायसद्भावो निश्चयः । निष्ठा उपलब्धिरित्यनर्थान्तरम् ।
N 113 एष महामते पदकायोपदेशः कृतो मया । व्यञ्जनकायः पुनर्महामते यदुत येन नामपदयोरभिव्यक्तिर्भवति । व्यञ्जनं लिङ्गं लक्षणमुपलब्धिः प्रज्ञप्तिरित्यनर्थान्तरम् ॥

पुनरपरं महामते पदकायो यदुत पदकार्यनिष्ठा । नाम पुनर्महामते यदुत अक्षराणां च नामस्वभावभेदोऽकाराद्यावद्धकारः । तत्र व्यञ्जनं पुनर्महामते यदुत ह्रस्वदीर्घप्लुतव्यञ्जनानि । तत्र पदकायाः पुनर्महामते ये पदवीथीगामिनो हस्त्यश्वनरमृगपशुगोमहिषाजैडकाद्याः पदकायसंज्ञां लभन्ते । नाम च व्यञ्जनं च पुनर्महामते चत्वार अरूपिणः स्कन्धाः । नाम्नाभिलप्यन्त इति कृत्वा नाम, स्वलक्षणेन व्यज्यते[1] इति कृत्वा व्यञ्जनम् । एतन्महामते नामपदव्यञ्जनकायानां नामपदाभिधानलक्षणम् । अत्र ते परिचयः करणीयः ॥

तत्रेदमुच्यते—

> व्यञ्जने पदकाये च नाम्नि चापि विशेषतः ।
> बालाः सज्जन्ति दुर्मेधा महापङ्के यथा गजाः ॥ १७० ॥

पुनरपरं महामते युक्तिहेतुबुद्धिवैकल्यात्कुतार्किका दुर्विदग्धमतयोऽनागतेऽध्वनि N 114
पृष्टा विद्वद्भिरेकत्वान्यत्वोभयानुभयदृष्टिलक्षणविनिर्मुक्तमन्तद्वयविधिं पृच्छद्भिरेवं वक्ष्यन्ति—अप्रश्नमिदं नेदं योनिश इति, यदुत रूपादिभ्योऽनित्यता अन्या अनन्येति । एवं निर्वाणं संस्कारेभ्यो लक्षणाल्लक्षणं गुणेभ्यो गुणी भूतेभ्यो भौतिकं दृश्याद्दर्शनं पांशुभ्योऽणवो ज्ञानाद्योगिनः, एवमाद्येनोत्तरोत्तरक्रमलक्षणविधिना अव्याकृतानि पृष्टाः स्थापनीयं भगवता अव्याकृतमिति वक्ष्यन्ति । न तु ते मोहपुरुषा एवं ज्ञास्यन्ति यथा श्रोतॄणां बुद्धिवैकल्यात् तथागता अर्हन्तः सम्यक्संबुद्धा उत्त्रासपदविवर्जनार्थं सत्त्वानां न व्याकुर्वन्ति । अव्याकृतान्यपि च महामते तीर्थकरदृष्टिवादव्युदासार्थं नोपदिश्यन्ते तथागतैः । तीर्थकरा हि महामते एवंवादिनः—यदुत स जीवस्तच्छरीरम्, अन्यो जीवोऽन्यच्छरीरम्, इत्येवमाद्येऽव्याकृतवादः । तीर्थकराणां हि महामते कारणविसंमूढानामव्याकृतं न तु मत्प्रवचने । मत्प्रवचने तु महामते ग्राह्यग्राहकविसंयुक्ते विकल्पो न प्रवर्तते । तेषां कथं स्थाप्यं भवेत्? ये तु N 115
महामते ग्राह्यग्राहकाभिनिविष्टाः स्वचित्तदृश्यमात्रानवधारितमतयस्तेषां स्थाप्यं भवति । चतुर्विधपदप्रश्नव्याकरणेन महामते तथागता अर्हन्तः सम्यक्संबुद्धाः सत्त्वेभ्यो धर्मं देशयन्ति । स्थापनीयमिति महामते कालान्तरदेशनैषा मया कृता अपरिपक्वेन्द्रियाणाम् । न तु परिपक्वेन्द्रियाणां स्थाप्यं भवति ॥

पुनरपरं महामते क्रियाकारकरहिताः सर्वधर्मा नोत्पद्यन्तेऽकारकत्वात् । तेनोच्यतेऽनुत्पन्नाः सर्वधर्माः । निःस्वभावाः पुनर्महामते सर्वभावाः केन कारणेन? यस्मान्महामते स्वबुद्ध्या विचार्यमाणानां स्वसामान्यलक्षणाभावा नावधार्यन्ते, तेनोच्यन्ते निःस्वभावाः सर्वधर्मा इति । तत्र अनायूहानिर्यूहाः पुनर्महामते सर्वधर्माः केन कारणेन? यस्मान्महामते स्वसामान्यलक्षणमायूह्यमानं नायूह्यते, निर्यूह्यमानं न निर्यूह्यते । अत एतस्मात्कारणान्महामते सर्वधर्मा आयूहनिर्यूहविगताः । अनिरुद्धाः पुनर्महामते सर्वधर्माः केन कारणेन? यदुत भावस्वभावलक्षणासत्त्वात्सर्वधर्मा नोपलभ्यन्ते । तेनोच्यन्तेऽनिरुद्धाः सर्वधर्मा इति । तत्र

१ N व्यञ्जन for व्यज्यते which is based on C and T.

N 116 अनित्याः पुनर्महामते सर्वधर्माः केन कारणेनोच्यन्ते ? यदुत लक्षणोत्पत्त्यनित्यभावात् । तेनोच्यन्ते अनित्याः सर्वधर्मा इति । तत्र नित्याः पुनर्महामते सर्वधर्माः केन कारणेन ? यदुत लक्षणोत्पन्नानुत्पन्नाभावादनित्यतया नित्याः । तेनोच्यन्ते महामते नित्याः सर्वधर्मा इति ॥

तत्रेदमुच्यते—

चतुर्विधं व्याकरणमेकांशं परिपृच्छनम् ।
विभज्यं स्थापनीयं च तीर्थवादनिवारणम् ॥ १७१ ॥
सदसतोर्ह्यनुत्पादः सांख्यवैशेषिकैः स्मृतः ।
अव्याकृतानि सर्वाणि तैरेव हि प्रकाशिता ॥ १७२ ॥
बुद्ध्या विवेच्यमानानां स्वभावो नावधार्यते ।
तस्मादनभिलाप्यास्ते निःस्वभावाश्च देशिताः ॥ १७३ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—देशयतु मे भगवान् स्रोतआपन्नानां स्रोतआपत्तिगतिप्रभेदनयलक्षणम् । येन स्रोतआपत्तिगतिप्रभेदनयलक्षणेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वाः स्रोतआपन्नानां स्रोतआपत्तिगतिप्रभेदनयलक्षणकुशला उत्तरोत्तरसकृदागाम्यनागाम्यर्हत्त्वोपायलक्षणविधिज्ञास्तथा सत्त्वेभ्यो
N 117 धर्मं देशयेयुः, यथा नैरात्म्यलक्षणद्वयमावरणद्वयं च प्रतिविशोध्य भूमेर्भूमिलक्षणातिक्रमगतिंगतास्तथागताचिन्त्यगतिविषयगोचरं प्रतिलभ्य विश्वरूपमणिसदृशाः सर्वसत्त्वोपजीव्यतामधिगच्छेयुः, सर्वधर्मविषयगतिकायोपभोग्यतोपजीव्याः स्युः ॥

भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्—त्रय इमे महामते स्रोतआपन्नानां स्रोतआपत्तिफलप्रभेदाः । कतमे त्रयः ? यदुत हीनमध्यविशिष्टाः तत्र महामते हीनः सप्तजन्मभवपरमः । मध्यः पुनर्महामते त्रिपञ्चभवपरिनिर्वायी भवति । उत्तमः पुनर्महामते तज्जन्मपरिनिर्वायी भवति । एषां तु महामते त्रयाणां त्रीणि संयोजनानि मृदुमध्याधिमात्राण्येव भवन्ति । तत्र महामते कतमानि त्रीणि संयोजनानि ? यदुत सत्कायदृष्टिर्विचिकित्सा शीलव्रतपरामर्शश्च । एतानि महामते त्रीणि संयोजनानि विशेषोत्तरोत्तरेण अर्हतामर्हत्फलीभवन्ति । तत्र महामते सत्कायदृष्टिर्द्विविधा यदुत सहजा
N 118 च परिकल्पिता च, परतन्त्रपरिकल्पितस्वभाववत् । तद्यथा महामते परतन्त्रस्वभावाश्रयाद्विचित्रपरिकल्पितस्वभावाभिनिवेशः प्रवर्तते । स च तत्र न सन्नासन्न सदसन्, अभूतपरिकल्पलक्षणत्वात् । अथ च बालैर्विकल्प्यते विचित्रस्वभावलक्षणाभिनिवेशेन मृगतृष्णिकेव मृगैः । इयं महामते स्रोतआपन्नस्य परिकल्पिता सत्कायदृष्टिरज्ञानाच्चिरकालाभिनिवेशसंचिता । सा च तस्य पुद्गलनैरात्म्यग्रहाभावतः प्रहीणा । सहजा पुनर्महामते स्रोतआपन्नस्य सत्कायदृष्टिः स्वपरकायसमतया चतुःस्कन्धरूपलक्षणत्वाद्रूपस्योत्पत्तिभूतभौतिकत्वात्परस्परहेतु-

लक्षणत्वाद्भूतानां रूपस्यासमुदय इति कृत्वा स्रोतआपन्नस्य सदसत्पक्षदृष्टिदर्शनात्सत्कायदृष्टिः प्रहीणा भवति । अत एव[1] सत्कायदृष्टिप्रहीणस्य रागो न प्रवर्तते । एतन्महामते सत्कायदृष्टिलक्षणम् ॥

विचिकित्सालक्षणं पुनर्महामते यदुत प्राप्तिधर्माधिगमसुदृष्टिलक्षणत्वात्पूर्वं सत्कायदृष्टिद्वयविकल्पप्रहीणत्वाच्च विचिकित्सा धर्मेषु न भवति । न चास्य अन्या शास्तृदृष्टिर्भवति शुद्धाशुद्धितः । एतन्महामते विचिकित्सालक्षणं स्रोतआपन्नस्य ॥ N 119

शीलं पुनर्महामते कथं न परामृशति स्रोतआपन्नः ? यदुत दुःखोपपत्त्यायतनलक्षणसंदृष्टत्वान्न परामृशति । परामृष्टिः पुनर्महामते यदुत शीलव्रततपोनियमैर्बालपृथग्जना भोगसुखाभिलाषिणो भवोत्पत्तिं प्रार्थयन्ते, न च परामृशन्ति । एवमन्यत्र स्वप्रत्यात्माधिगमविशेषगामितायां परिणामयन्ति । निर्विकल्पानास्रवधर्मलक्षणाकारेण प्रसज्यन्ते शीलाङ्गैः । एतन्महामते स्रोतआपन्नस्य शीलव्रतपरामर्शलक्षणं भवति । न तु महामते स्रोतआपन्नस्य त्रिसंयोजनप्रहीणस्य रागद्वेषमोहाः प्रवर्तन्ते ॥

महामतिराह–रागः पुनर्भगवता बहुप्रकार उपदिष्टः । तत्कतमस्तस्यात्र रागः प्रहीणो भवति ? भगवानाह–विषयकामेन्द्रियः स्त्रीसंयोगरागः प्रत्युत्पन्नसुखः आयत्यां दुःखजन्महेतुकः खटचपेटलिङ्गितचुम्बितपरिष्वक्ताघ्रातकटाक्षेक्षितैः । तस्य महामते रागो न प्रवर्तते । तत्कस्य हेतोः ? यदुत समाधिसुखविहारलाभित्वात् । अत एष प्रहीणो भवति, न निर्वाणाधिगमरागः ॥ N 120

सकृदागामिफललक्षणं पुनर्महामते कतमत् ? यदुत सकृद्रूपलक्षणाभासविकल्पः प्रवर्तते । निमित्तदृष्टिलक्ष्यलक्षणाभावाद्ध्यानगतिलक्षणसुदृष्टत्वात्सकृदेतं लोकमागम्य दुःखस्यान्तक्रियायै परिनिर्वास्यति । तेनोच्यते सकृदागामीति । तत्र अनागामीति महामते कथं भवति ? यदुत अतीतानागतप्रत्युत्पन्नस्य रूपलक्षणभावाभावप्रवृत्तेर्दृष्टिदोषानुशयविकल्पस्य अनागामित्वादनागामिरूपप्रहीणत्वाच्च संयोजनानामनागामीत्युच्यते । अर्हन् पुनर्महामते ध्यानध्येयसमाधिविमोक्षबलाभिज्ञाक्लेशदुःखविकल्पाभावादर्हन्नित्युच्यते ॥

महामतिराह–त्रयः पुनर्भगवता अर्हन्तोऽभिहिताः । तत्कतमस्यायं भगवन्नर्हच्छब्दो निपात्यते ? किं भगवन् शमैकायनमार्गप्रतिलम्भिकस्य, उत बोधिप्रणिधानाभ्यस्तकुशलमूलसंमूढस्य, उत निर्मितनैर्माणिकस्य ? भगवानाह–शमैकायनमार्गप्रतिलम्भिकस्य महामते श्रावकस्य, न त्वन्येषाम् । अन्ये पुनर्महामते बोधिसत्त्वचर्याचरिताविनो बुद्धनिर्मितनैर्माणिकाश्च उपायकुशलमूलप्रणिधानपूर्वकत्वात्पर्षन्मण्डलेषूपपत्तिं दर्शयन्ति बुद्धपर्षन्मण्डलोपशोभनार्थम् । विकल्पगतिसंस्थानान्तरविचित्रोपदेशोऽयं महामते यदुत फलाधिगमध्यानध्यातृध्येयविविक्तत्वात्स्वचित्तदृश्योपगमात्फलप्राप्तिलक्षणमुपदिश्यते । पुनरपरं महामते यदि N 121

१ N एवं against Mss.

स्रोतआपन्नस्यैतदभविष्यत्–इमानि संयोजनानि, अहमेभिर्न संयुक्त इति, तद्द्वित्वप्रसङ्ग[1] आत्मदृष्टिपतितः स्यादप्रहीणसंयोजनश्च ॥

पुनरपरं महामते ध्यानाप्रमाणारूप्यधातुसमतिक्रमाय स्वचित्तदृश्यलक्षणव्यावृत्तिः करणीया। संज्ञावेदितनिरोधसमापत्तिश्च महामते स्वचित्तदृश्यगतिव्यतिक्रमस्तस्य न युज्यते चित्तमात्रत्वात् ॥

तत्रेदमुच्यते–

ध्यानानि चाप्रमाणानि आरूप्याश्च समाधयः।
संज्ञानिरोधो निखिलश्चित्तमात्रे न विद्यते ॥ १७४ ॥
स्रोतापत्तिफलं चैव सकृदागामिनस्तथा।
अनागामिफलं चैव अर्हत्त्वं चित्तविभ्रमः ॥ १७५ ॥
ध्याता ध्यानं च ध्येयं च प्रहाणं सत्यदर्शनम्।
कल्पनामात्रमेवेदं यो बुध्यति स मुच्यते ॥ १७६ ॥

N 122 पुनरपरं महामते द्विप्रकारा बुद्धिः प्रविचयबुद्धिश्च विकल्पलक्षणग्राहाभिनिवेशप्रतिष्ठापिका च। तत्र महामते प्रविचयबुद्धिर्नाम यदुत यया बुद्ध्या भावस्वभावलक्षणं प्रविचीयमानं चतुष्कोटिकारहितं नोपलभ्यते, सा प्रविचयबुद्धिः। तत्र महामते चतुष्कोटिका यदुत एकत्वान्यत्वोभयनोभयास्तिनास्तिनित्यानित्यरहितां चतुष्कोटिकामिति वदामि। एतया चतुष्कोटिकया महामते रहिताः सर्वधर्मा इत्युच्यते। इयं महामते चतुष्कोटिका सर्वधर्मपरीक्षायां प्रयोक्तव्या। तत्र महामते विकल्पलक्षणग्राहाभिनिवेशप्रतिष्ठापिका बुद्धिः कतमा? यदुत येन महामते चित्तविकल्पलक्षणग्राहाभिनिवेशेन उष्णद्रवचलकठिनानभूतपरिकल्पलक्षणान् महाभूतान् प्रतिज्ञाहेतुलक्षणदृष्टान्ताभिनिवेशादसद्भूतसमारोपेण समारोपयति, सा विकल्पलक्षणग्राहाभिनिवेशप्रतिष्ठापिका बुद्धिः। एतन्महामते बुद्धिद्वयस्य लक्षणं येन बुद्धिद्वयलक्षणेन
N 123 समन्वागता बोधिसत्त्वा धर्मपुद्गलनैरात्म्यलक्षणगतिंगता निराभासबुद्धिप्रविचयचर्याभूमिकुशलाः प्रथमां भूमिं प्रतिलभन्ते, समाधिशतं च समापद्यन्ते। बुद्धबोधिसत्त्वशतं च समाधिविशेषप्रतिलम्भेन पश्यन्ति, कल्पशतं च पूर्वान्तापरान्ततोऽनुप्रविशन्ति, क्षेत्रशतं चावभासयन्ति। क्षेत्रशतं चावभास्य उत्तरोत्तरभूमिलक्षणविधिज्ञाः प्रणिधानवैशेषिकतया विक्रीडन्तो धर्ममेघाभिषेकाभिषिक्तास्तथागतप्रत्यात्मभूमिमधिगम्य दशनिष्ठापदसुनिबद्धधर्माणः सत्त्वपरिपाकाय विचित्रैर्निर्माणकिरणैर्विराजन्ते प्रत्यात्मगतिसुखसमाहिताः ॥

पुनरपरं महामते बोधिसत्त्वेन महासत्त्वेन महाभूतभौतिककुशलेन भवितव्यम्। कथं च महामते बोधिसत्त्वो महाभूतभौतिककुशलो भवति? तत्र महामते बोधिसत्त्वो महासत्त्व इतः प्रतिसंशिक्षते तत्सत्यं यत्र महाभूतानामसंभवोऽसंभूतानि चेमानि महामते भूतानीति प्रतिविपश्यति। एवं प्रतिविपश्यन् नाम विकल्पमात्रं स्वचित्तदृश्यमात्रावबोधाद्बाह्यभावाभावान्नाम चित्तदृश्यविकल्पमात्रमिदं यदुत त्रैधातुकं महाभूतभौतिकरहितं प्रतिविपश्यति चातु-

१ N °प्रसंगत्वात्मदृष्टि° for °प्रसङ्ग आत्मदृष्टि° which is supported by T.

ष्कोटिकनयविशुद्धिमात्मात्मीयरहितं यथाभूतस्वलक्षणावस्थानावस्थितमनुत्पादस्वलक्षणसिद्धम्। N 124 तत्र महामते महाभूतेषु कथं भौतिकं भवति? यदुत स्नेहविकल्पमहाभूतं महामते अब्धातुं निष्पादयत्यध्यात्मबाह्यम्। उत्साहविकल्पमहाभूतं महामते तेजोधातुं निष्पादयत्यध्यात्मबाह्यम्। समुदीरणविकल्पमहाभूतं महामते वायुधातुं निष्पादयत्यध्यात्मबाह्यम्। रूपपरिच्छेदविकल्पमहाभूतं पुनर्महामते पृथिवीधातुं जनयत्याकाशसहितमध्यात्मबाह्यम्। मिथ्यासत्याभिनिवेशात्पञ्चस्कन्धकदम्बकं महाभूतभौतिकं प्रवर्तते। विज्ञानं पुनर्महामते विचित्रपदविषयाभिनिवेशाभिलाषहेतुत्वाद्विज्ञानं प्रवर्ततेऽन्यगतिसंधौ। पृथिवीभूतभौतिकानां महामते कारणमस्ति महाभूतानि, न तु महाभूतानाम्। तत्कस्य हेतोः? यदुत भावलिङ्गलक्षणग्रहणसंस्थानक्रियायोगवतां महामते क्रियासंयोगोत्पत्तिर्भवति नालिङ्गवताम्। तस्मादेतन्महामते महाभूतभौतिकलक्षणं तीर्थकरैर्विकल्प्यते न तु मया॥

पुनरपरं महामते स्कन्धानां स्कन्धस्वभावलक्षणं निर्देक्ष्यामः। तत्र महामते पञ्च N 125 स्कन्धाः। कतमे? यदुत रूपवेदनासंज्ञासंस्कारविज्ञानानि। तत्र महामते चत्वारः स्कन्धा अरूपिणो वेदना संज्ञा संस्कारा विज्ञानं च। रूपं महामते चातुर्महाभौतिकम्, भूतानि च परस्परविलक्षणानि। न च महामते अरूपिणां चतुष्कसंख्या भवत्याकाशवत्। तद्यथा महामते आकाशं संख्यालक्षणातीतम्, अथ च विकल्प्यते एवमाकाशमिति, एवमेव महामते स्कन्धाः संख्यालक्षणगणनातीता भावाभावविवर्जिताश्चातुष्कोटिकरहिताः संख्यागणनानिर्देशेन निर्दिश्यन्ते बालैर्न त्वार्यैः॥

आर्यैः पुनर्महामते मायाविचित्ररूपाकृतिवदन्यानन्यवर्जिताः प्रज्ञाप्यन्ते स्वप्नबिम्बपुरुषवत्। आश्रयानन्यत्वादार्यज्ञानगतिसंमोहान्महामते स्कन्धविकल्पः ख्यायते। एतन्महामते स्कन्धानां स्कन्धस्वभावलक्षणम्। स च विकल्पस्त्वया व्यावर्तनीयः, व्यावृत्य विविक्तधर्मोपदेशः करणीयः। सर्वबुद्धपर्षन्मण्डलेषु तीर्थ्यदृष्टिनिवारणाय विविक्तधर्मोपदेशेन महामते क्रियमाणेन धर्मनैरात्म्यदर्शनं विशुध्यते, दूरंगमाभूमिप्रवेशश्च भवति। स दूरंगमां महाभूमिमनुप्रविश्य अनेकसमाधिवशवर्ती भवति। मनोमयकायप्रतिलम्भाच्च समाधिं मायोपमं N 126 प्रतिलभते। बलाभिज्ञावशितागतिंगतः सर्वसत्त्वोपजीव्यो भवति पृथिवीवत्। यथा महामते महापृथिवी सर्वसत्त्वोपजीव्या भवति, एवमेव महामते बोधिसत्त्वो महासत्त्वः सर्वसत्त्वोपजीव्यो भवति॥

पुनरपरं महामते चतुर्विधं निर्वाणम्। कतमच्चतुर्विधम्? यदुत भावस्वभावाभावनिर्वाणं लक्षणविचित्रभावाभावनिर्वाणं स्वलक्षणभावाभावावबोधनिर्वाणं स्कन्धानां स्वसामान्यलक्षणसंततिप्रबन्धव्युच्छेदनिर्वाणम्। एतन्महामते चतुर्विधं तीर्थकराणां निर्वाणं न तु मत्प्रवचने। मत्प्रवचने पुनर्महामते विकल्पकस्य मनोविज्ञानस्य व्यावृत्तिर्निर्वाणमित्युच्यते॥

महामतिराह—ननु भगवता अष्टौ विज्ञानानि व्यवस्थापितानि? भगवानाह—व्यवस्थापितानि महामते। महामतिराह—तद्यदि भगवन् व्यवस्थापितानि, तत्कथं मनोविज्ञानस्यैव

व्यावृत्तिर्भवति न तु सप्तानां विज्ञानानाम्? भगवानाह—तद्धेत्वालम्बनत्वान्महामते सप्तानां विज्ञानानां प्रवृत्तिर्भवति। मनोविज्ञानं पुनर्महामते विषयपरिच्छेदाभिनिवेशेन प्रवर्तमानं
N 127 वासनाभिरालयविज्ञानं प्रपुष्णाति। मनः सहितमात्मात्मीयग्राहाभिनिवेशमन्यनाकारेणानुप्रवर्तते। अभिन्नशरीरलक्षणमालयविज्ञानहेत्वालम्बनं स्वचित्तदृश्यविषयाभिनिवेशाच्चित्तकलापः प्रवर्ततेऽन्योन्यहेतुकः। उदधितरंगा इव महामते स्वचित्तदृश्यविषयपवनेरिताः प्रवर्तन्ते निवर्तन्ते च। अतस्तेन महामते मनोविज्ञानेन व्यावृत्तेन सप्तानां विज्ञानानां व्यावृत्तिर्भवति॥

तत्रेदमुच्यते—

नाहं निर्वामि भावेन क्रियया लक्षणेन च।
विकल्पहेतुविज्ञाने निवृत्ते निर्वृतो ह्यहम्॥ १७७॥
तद्धेतुकं तदालम्ब्य मनोगतिसमाश्रयम्।
हेतुं ददाति चित्तस्य विज्ञानं च समाश्रितम्॥ १७८॥
यथा क्षीणे महाओघे तरंगाणामसंभवः।
तथा विज्ञानवैचित्र्यं निरुद्धं न प्रवर्तते॥ १७९॥

पुनरपरं महामते परिकल्पितस्वभावप्रभेदनयलक्षणमुपदेक्ष्यामो येन परिकल्पितस्वभावप्रभेदनयलक्षणेन सुप्रतिविभागविद्धेन त्वं च अन्ये च बोधिसत्त्वा महासत्त्वा
N 128 विकल्पकल्परहिताः प्रत्यात्मार्यस्वगतितीर्थ्यनयगतिसुदृष्टबुद्धयो ग्राह्यग्राहकविकल्पप्रहीणाः परतन्त्रविविधविचित्रलक्षणं परिकल्पितस्वभावाकारं न प्रतिविकल्पयिष्यन्ति। तत्र महामते कतमत्परिकल्पितस्वभावप्रभेदनयलक्षणम्? यदुत अभिलापविकल्पोऽभिधेयविकल्पो लक्षणविकल्पोऽर्थविकल्पः स्वभावविकल्पो हेतुविकल्पो दृष्टिविकल्पो युक्तिविकल्प उत्पादविकल्पोऽनुत्पादविकल्पः संबन्धविकल्पो बन्धाबन्धविकल्पः। एतन्महामते परिकल्पितस्वभावप्रभेदनयलक्षणम्॥

तत्र महामते अभिलापविकल्पः कतमः[1]? यदुत विचित्रस्वरगीतमाधुर्याभिनिवेशः। एष महामते अभिलापविकल्पः। तत्र महामते अभिधेयविकल्पः कतमः[1]? यदुत अस्ति तत्किंचिदभिधेयवस्तु स्वभावकमार्यज्ञानगतिगम्यं यदाश्रित्याभिलापः प्रवर्तते इति विकल्पयति। तत्र लक्षणविकल्पः कतमः[1]? यदुत तस्मिन्नेवाभिधेये मृगतृष्णाख्ये लक्षणवैचित्र्याभिनिवेशेनाभिनिवेशते यदुत उष्णद्रवचलकठिनलक्षणात्सर्वभावान् विकल्पयति। तत्र अर्थविकल्पः कतमः[1]? यदुत सुवर्णरूप्यविविधरत्नार्थविषयाभिलापः। तत्र स्वभावविकल्पः
129 कतमः[1]? यदुत भावस्वभावावधारणमिदमेवमिदं नान्यथेति तीर्थ्यविकल्पदृष्ट्या विकल्पयन्ति। तत्र हेतुविकल्पः कतमः[1]? यदुत यद्येन हेतुप्रत्ययेन सदसतोर्विभज्यते हेतुलक्षणोत्पत्तितः स हेतुविकल्पः। तत्र दृष्टिविकल्पः कतमः[1]? यदुत नास्त्यस्तित्वैकत्वान्यत्वोभयानुभयकुदृष्टि-

---

१ N कतमद् for कतमः.

तीर्थ्यविकल्पाभिनिवेशः । तत्र युक्तिविकल्पः कतमः[1] ? यदुत आत्मात्मीयलक्षणयुक्तिविग्रहोपदेशः । तत्र उत्पादविकल्पः कतमः ? यदुत प्रत्ययैः सदसतोर्भावस्योत्पादाभिनिवेशः । तत्र अनुत्पादविकल्पः कतमः ? यदुत अनुत्पन्नपूर्वाः सर्वभावा अभूत्वा प्रत्ययैर्भवन्त्यहेतुशरीराः । तत्र संबन्धविकल्पः कतमः ? यदुत सह संबध्यते सुवर्णतन्तुवत् । तत्र बन्धाबन्धविकल्पः कतमः ? यदुत बन्धहेतुबन्ध्याभिनिवेशवत् । यथा पुरुषः पाशसंयोगाद्रज्जुग्रन्थिः क्रियते मुच्यते च । एवं महामते परिकल्पितस्वभावप्रभेदनयलक्षणम्, यस्मिन् परिकल्पितस्वभावप्रभेदनयलक्षणे सर्वबालपृथग्जना अभिनिविशन्ते । सदसतः परतन्त्राभिनिवेशाभिनिविष्टा महामते परिकल्पितस्वभाववैचित्र्यमभिनिविशन्ते । मायाश्रयवैचित्र्यदर्शनवदन्यमायादर्शनबुद्ध्या बालैर्विकल्प्यन्ते । माया च महामते वैचित्र्यान्नान्या नानन्या । N 130
यद्यन्या स्यात्, वैचित्र्यं मायाहेतुकं न स्यात् । अथानन्या स्यात्, वैचित्र्यान्मायावैचित्र्ययोर्विभागो न स्यात् । स च दृष्टो विभागः । तस्मान्नान्या नानन्या । अत एतस्मात्कारणान्महामते त्वया अन्यैश्च बोधिसत्त्वैर्महासत्त्वैर्माया नास्त्यस्तित्वेन नाभिनिवेष्टव्या ॥

तत्रेदमुच्यते—

चित्तं विषयसंबन्धं ज्ञानं तर्के प्रवर्तते ।
निराभासे विशेषे च प्रज्ञा वै संप्रवर्तते ॥ १८० ॥
परिकल्पितस्वभावोऽस्ति परतन्त्रे न विद्यते ।
कल्पितं गृह्यते भ्रान्त्या परतन्त्रं न कल्प्यते ॥ १८१ ॥
विविधाङ्गाभिनिर्वृत्त्या यथा माया न सिध्यति ।
निमित्तं हि तथा चित्रं कल्प्यमानं न सिध्यति ॥ १८२ ॥
निमित्तं दौष्ठुल्यमयं[2] बन्धनं चित्तसंभवम् ।
परिकल्पितं ह्यजानानं परतन्त्रैर्विकल्प्यते ॥ १८३ ॥
यदेतत्कल्पितं भावं परतन्त्रं तदेव हि ।
कल्पितं हि विचित्राभं परतन्त्रे विकल्प्यते ॥ १८४ ॥ N 131
संवृतिः परमार्थश्च तृतीयं नास्तिहेतुकम् ।
कल्पितं संवृतिर्ह्युक्ता तच्छेदादार्यगोचरम् ॥ १८५ ॥
यथा हि योगिनां वस्तु चित्रमेकं विराजते ।
न ह्यस्ति चित्रता तत्र तथा कल्पितलक्षणम् ॥ १८६ ॥
यथा हि तैमिरैश्चित्रं कल्प्यते रूपदर्शनम् ।
तिमिरं न रूपं नारूपं परतन्त्रं तथाबुधैः ॥ १८७ ॥
हैमं स्यात्तु यथा शुद्धं जलं कलुषवर्जितम् ।
गगनं हि घनाभावात्तथा शुद्धं विकल्पितम् ॥ १८८ ॥

---

१ N कतमद् for कतमः. २ N दौष्ठुल्यनयं for °मयं which is supported by T.

नास्ति वै कल्पितो भावः परतन्त्रश्च विद्यते।
समारोपापवादं हि विकल्पन्तो विनश्यति ॥ १८९ ॥
कल्पितं यद्यभावं स्यात्परतन्त्रस्वभावतः।
विना भावेन वै भावो भावश्चाभावसंभवः ॥ १९० ॥
परिकल्पितं समाश्रित्य परतन्त्रोपलभ्यते।
निमित्तनामसंबन्धाज्जायते परिकल्पितम् ॥ १९१ ॥
अत्यन्तं चाप्यनिष्पन्नं कल्पितं न परोद्भवम्।
N 132 तदा प्रज्ञायते शुद्धं स्वभावं पारमार्थिकम् ॥ १९२ ॥
परिकल्पितं दशविधं परतन्त्रं च षड्विधम्।
प्रत्यात्मतथताज्ञेयमतो नास्ति विशेषणम् ॥ १९३ ॥
पञ्च धर्मा भवेत्तत्त्वं स्वभावा हि त्रयस्तथा।
एतद्विभावयेद्योगी तथतां नातिवर्तते ॥ १९४ ॥
निमित्तं परतन्त्रं हि यन्नाम तत्प्रकल्पितम्।
परिकल्पितनिमित्तं तु पारतन्त्र्यात्प्रवर्तते ॥ १९५ ॥
बुद्ध्या विवेच्यमानं तु न तन्त्रं नापि कल्पितम्।
निष्पन्नो नास्ति वै भावः कथं बुद्ध्या विकल्प्यते ॥ १९६ ॥
निष्पन्नो विद्यते भावो भावाभावविवर्जितः।
भावाभावविनिर्मुक्तो द्वौ स्वभावौ कथं नु तौ ॥ १९७ ॥
परिकल्पितस्वभावे द्वौ स्वभावौ द्वौ प्रतिष्ठितौ।
कल्पितं दृश्यते चित्रं विशुद्धं चार्यगोचरम् ॥ १९८ ॥
कल्पितं हि विचित्राभं परतन्त्रैर्विकल्प्यते।
अन्यथा कल्प्यमानं हि तीर्थ्यवादं समाश्रयेत् ॥ १९९ ॥
कल्पना कल्पितेत्युक्तं दर्शनाद्धेतुसंभवम्।
विकल्पद्वयनिर्मुक्तं निष्पन्नं स्यात्तदेव हि ॥ २०० ॥

N 133

पुनरपि महामतिराह—देशयतु मे भगवान् प्रत्यात्मार्यज्ञानगतिलक्षणमेकयानं च, येन भगवन् प्रत्यात्मैकयानगतिलक्षणेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वाः प्रत्यात्मार्यज्ञानैकयानकुशला अपरप्रणेया भविष्यन्ति बुद्धधर्मेषु ॥

भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत्। भगवांस्तस्यैतदवोचत्—प्रमाणाप्तोपदेशविकल्पाभावान्महामते बोधिसत्त्वो महासत्त्व एकाकी रहोगतः स्वप्रत्यात्मबुद्ध्या विचारयत्यपरप्रणेयो दृष्टिविकल्पविवर्जित उत्तरोत्तरतथागतभूमिप्रवेशनतया व्यायमते। एतन्महामते स्वप्रत्यात्मार्यज्ञानगतिलक्षणम्। तत्र एकयानगतिलक्षणं कतमत्?

यदुत एकयानमार्गाधिगमावबोधादेकयानमिति वदामि । एकयानमार्गाधिगमावबोधः कतमः ? यदुत ग्राह्यग्राहकविकल्पयथाभूतावस्थानादप्रवृत्तेर्विकल्पस्य एकयानावबोधः कृतो भवति । एष एकयानावबोधो महामते नान्यतीर्थ्यश्रावकप्रत्येकबुद्धब्रह्मादिभिः प्राप्तपूर्वोऽन्यत्र मया । N 134
अत एतस्मात्कारणान्महामते एकयानमित्युच्यते ॥

महामतिराह—किं कारणं भगवता यानत्रयमुपदिष्टम्, एकयानं नोपदिश्यते ? भगवानाह—स्वयमपरिनिर्वाणधर्मत्वान्महामते सर्वश्रावकप्रत्येकबुद्धानामेकयानं न वदामि । यस्मान्महामते सर्वश्रावकप्रत्येकबुद्धास्तथागतविनयविवेकयोगोपदेशेन विमुच्यन्ते न स्वयम् ॥

पुनरपरं महामते ज्ञेयावरणकर्मवासनाप्रहीणत्वात्सर्वश्रावकप्रत्येकबुद्धानां नैकयानम् । धर्मनैरात्म्यानवबोधाच्च अचिन्त्यपरिणामच्युतेरप्राप्तित्वाच्च यानत्रयं देशयामि श्रावकाणाम् । यदा तेषां महामते सर्वदोषवासनाः प्रहीणा भवन्ति धर्मनैरात्म्यावबोधात्, तदा ते वासनादोषसमाधिमदाभावादनास्रवधातौ प्रतिविबुध्यन्ते । पुनरपि लोकोत्तरानास्रवधातुपर्यापन्नान् संभारान् परिपूर्य अचिन्त्यधर्मकायवशवर्तितां प्रतिलप्स्यन्ते ॥

तत्रेदमुच्यते—

देवयानं ब्रह्मयानं श्रावकीयं तथैव च ।
ताथागतं च प्रत्येकं यानानेतान् वदाम्यहम् ॥ २०१ ॥ N 135
यानानां नास्ति वै निष्ठा यावच्चित्तं प्रवर्तते ।
चित्ते तु वै परावृत्ते न यानं न च यानिनः ॥ २०२ ॥
यानव्यवस्थानं नैवास्ति यानभेदं वदाम्यहम् ।
परिकर्षणार्थं बालानां यानभेदं वदाम्यहम् ॥ २०३ ॥
विमुक्तयस्तथा तिस्रो धर्मनैरात्म्यमेव च ।
समताज्ञानक्लेशाख्या विमुक्त्या ते विवर्जिताः ॥ २०४ ॥
यथा हि काष्ठमुदधौ तरंगैर्विप्रवाह्यते ।
तथा हि श्रावको मूढो लक्षणेन प्रवाह्यते ॥ २०५ ॥
वासनाक्लेशसंबद्धाः पर्युत्थानैर्विसंयुताः ।
समाधिमदमत्तास्ते धातौ तिष्ठन्त्यनास्रवे ॥ २०६ ॥
निष्ठागतिर्न तस्यास्ति न च भूयो निवर्तते ।
समाधिकायं संप्राप्य आ कल्पान्न प्रबुध्यते ॥ २०७ ॥
यथा हि मत्तपुरुषो मद्याभावाद्विबुध्यते ।
तथा ते बुद्धधर्माख्यं कायं प्राप्स्यन्ति मामकम् ॥ २०८ ॥

इति लङ्कावतारे षट्त्रिंशत्साहस्रसर्वधर्मसमुच्चयो नाम द्वितीयः परिवर्तः ॥



# ३ अनित्यतापरिवर्तो नाम तृतीयः ।

N 136 अथ खलु भगवान् पुनरपि महामतिं बोधिसत्त्वं महासत्त्वमेतदवोचत्—मनोमयकायगतिप्रभेदनयलक्षणं महामते उपदेक्ष्यामि । तच्छृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्—त्रिप्रकारो महामते कायो मनोमयः । कतमस्त्रिप्रकारः? यदुत समाधिसुखसमापत्तिमनोमयो धर्मस्वभावावबोधमनोमयो निकायसहजसंस्कारक्रियामनोमयश्च । प्रथमोत्तरोत्तरभूमिलक्षणपरिज्ञानादधिगच्छन्ति योगिनः । तत्र कतमो महामते समाधिसुख-
N 137 समापत्तिमनोमयः कायः? यदुत त्रिचतुर्थपञ्चम्यां भूमौ स्वचित्तविविधविवेकविहारेण चित्तोदधिप्रवृत्तितरंगविज्ञानलक्षणसुखसमापत्तिमनसोऽप्रवृत्तिः स्वचित्तदृश्यविषयाभावाभावपरिज्ञानान्मनसो मनोमयः काय इत्युच्यते । तत्र धर्मस्वभावावबोधमनोमयः कायः कतमः? यदुत अष्टम्यां भूमौ मायादिधर्मनिराभासप्रविचयावबोधेन चित्ताश्रयपरावृत्तस्य मायोपमसमाधिप्रतिलम्भादन्येषां च समाधिमुखानां प्रतिलम्भादनेकलक्षणवशिताभिज्ञाकुसुमितं मनोजवसदृशं मायास्वप्नबिम्बप्रख्यमभौतिकं भूतभौतिकसदृशं सर्वरूपविचित्राङ्गसमुदितं सर्वबुद्धक्षेत्रपर्षन्मण्डलानुगतं कायं धर्मस्वभावगतिंगतत्वान्मनोमय इत्युच्यते । तत्र निकायसहजसंस्कारक्रियामनोमयः कायः कतमः? यदुत सर्वबुद्धधर्मप्रत्यात्माधिगमसुखलक्षणावबोधान्निकायसहजसंस्कारक्रियामनोमय इत्युच्यते । अत्र ते महामते कायत्रयलक्षणप्रविचयावबोधे योगः करणीयः ॥

तत्रेदमुच्यते—

न मे यानं महायानं न घोषो न च अक्षराः ।
न सत्या न विमोक्षा वै न निराभासगोचरम् ॥ १ ॥
किं तु यानं महायानं समाधिवशवर्तिता ।
कायो मनोमयश्चित्रो वशितापुष्पमण्डितः ॥ २ ॥

N 138 अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—पञ्चानन्तर्याणि भगवता निर्दिष्टानि । कतमानि तानि भगवन् पञ्चानन्तर्याणि यान्यध्यापद्य कुलपुत्रो वा कुलदुहिता वा अवीचिको भवति? भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवानेतदवोचत्—तत्र महामते पञ्चानन्तर्याणि कतमानि? यदुत मातृपित्रर्हद्वधसंघभेदास्तथागतकाये दुष्टचित्तरुधिरोत्पादश्च ॥

तत्र महामते माता कतमा सत्त्वानाम्? यदुत तृष्णा पौनर्भविकी नन्दीरागसहगता मातृत्वेनोत्तिष्ठते[1] । अविद्या पितृत्वेनायतनग्रामस्योत्पत्तये । अनयोरुभयोर्मातापित्रोरत्यन्त-

---

१ N उतिष्ठते for उत्तिष्ठते which is supported by C and T.

मूलोपच्छेदान्मातृपितृवधो भवति । तत्र अनुशयानामरिप्रख्याणां मूषिकाविषवत्प्रकोपधर्मिणा-
मत्यन्तसमुद्घातादर्हद्वधो भवति । तत्र संघभेदः कतमः? यदुत भिन्नान्योन्यलक्षणस्य
स्कन्धसंघातस्यात्यन्तमूलोपघातात्संघभेद इत्युच्यते । स्वसामान्यबाह्यस्वचित्तदृश्यमात्रावबोध-
कानां महामते अष्टानां विज्ञानकायानां विमोक्षत्रयानास्रवदुष्टविकल्पेनात्यन्तोपघाताद्विज्ञान- N 139
बुद्धस्य दुष्टचित्तरुधिरोत्पादनादानन्तर्यकारीत्युच्यते । एतानि महामते आध्यात्मिकानि
पञ्चानन्तर्याणि यान्यध्यापद्य कुलपुत्रो वा कुलदुहिता वा आनन्तर्यकारी भवत्यभिसमितधर्मः ॥

पुनरपरं महामते बाह्यानि ते आनन्तर्याण्युपदेक्ष्यामि, यैरुपदिष्टैस्त्वं च अन्ये च
बोधिसत्त्वा अनागतेऽध्वनि संमोहं न गमिष्यन्ति । तत्र कतमानि तानि? यदुत यानि
देशनापाठेऽनुसंवर्णितान्यानन्तर्याणि, यान्यध्यापद्य तिसृणां विमुक्तीनामन्यतरान्यतरस्यां
नाभिसमेता भवन्ति अन्यत्र निर्मिताधिष्ठानाभिसमयात् । निर्मिताधिष्ठानश्रावको हि महामते
बोधिसत्त्वाधिष्ठानेन वा तथागताधिष्ठानेन वा । यस्य कस्यचिदन्यस्यानन्तर्यकारिणः
कौकृत्यं तस्य कौकृत्यदृष्टिविनिवर्तनार्थं निक्षिप्तधुरस्य कौकृत्यदृष्ट्यभावार्थम् । पुनरपि
प्रोत्साहनां करिष्यत इति कृत्वा निर्मिताधिष्ठानाभिसमयः प्रदर्श्यते मया । नास्त्येकान्तेन
महामते आनन्तर्यकारिणोऽभिसमयः अन्यत्र स्वचित्तदृश्यभावनामात्रतावबोधाद्देहभोगप्रतिष्ठा- N 140
गतिविकल्पात्मात्मीयग्राहविविक्तदर्शनात्कदाचित्कर्हिचित्कल्याणमित्रमासाद्य अन्यगतिसंधौ
स्वविकल्पदोषैर्विमुच्यते ॥

तत्रेदमुच्यते—

तृष्णा हि माता इत्युक्ता अविद्या च पिता तथा ।
विषयावबोधाद्विज्ञानं बुद्ध इत्युपदिश्यते ॥ ३ ॥
अर्हन्तो ह्यनुशयाः पञ्च संघाः स्कन्धकदम्बकः ।
निरन्तरान्तरच्छेदात्कर्मस्यानन्तरं भवेत् ॥ ४ ॥

पुनरपि महामतिराह—देशयतु मे भगवान् बुद्धानां भगवतां कथं भगवन् बुद्धानां बुद्धता भवति? भगवानाह—धर्मपुद्गलनैरात्म्यावबोधान्महामते आवरणद्वयपरिज्ञानावबोधाच्च च्युतिद्वयाधिगमात्क्लेशद्वयप्रहाणाच्च महामते बुद्धानां भगवतां बुद्धता भवति । एतेषामेव महामते धर्माणामधिगमाच्छ्रावकप्रत्येकबुद्धसंबुद्धता भवति । अत एतस्मान्महामते एकयानं देशयामि ॥

तत्रेदमुच्यते—

नैरात्म्यस्य द्वयं क्लेशास्तथैवावरणद्वयम् ।
अचिन्त्यपरिणामिन्याश्च्युतेर्लाभात्तथागतः ॥ ५ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—किं संधाय N 141
भगवता पर्षन्मध्यगतेन वाग्भाषिता—अहमेव सर्वबुद्धा येऽतीता जातकोपपत्तिवैचित्र्यं च ।
अहमेव च तेन कालेन तेन समयेन राजा मांधाता । गजः शुक इन्द्रो व्यासः सुनेत्रः,

इत्येवमाद्यानि भगवता जातकशतसहस्राण्युपदिष्टानि ? भगवानाह—चतुर्विधां समतां संधाय महामते तथागता अर्हन्तः सम्यक्संबुद्धाः पर्षन्मध्यगता वाचं निश्चारयन्ति यदुत अहमेव तेन कालेन तेन समयेन ककुच्छन्दः कनकमुनिः काश्यपश्चाभवम्। कतमां चतुर्विधसमतां संधाय ? यदुत अक्षरसमतां वाक्समतां धर्मसमतां कायसमतां च। इमां महामते चतुर्विधां समतां संधाय तथागता अर्हन्तः सम्यक्संबुद्धाः पर्षन्मध्यगता वाचं निश्चारयन्ति। तत्र महामते कतमा अक्षरसमता ? यदुत यैरक्षरैर्मम नाम बुद्ध इति, तैरेवाक्षरैस्तेषां बुद्धानां भगवतां तान्यक्षराणि महामते निर्विशिष्टान्यक्षराण्यक्षरस्वभावत्वेन। इयं महामते अक्षर-
N 142 समता। तत्र महामते कतमा वाक्समता तथागतानामर्हतां सम्यक्संबुद्धानाम् ? यदुत ममापि चतुष्षष्ट्याकारो ब्रह्मस्वररुतघोषवाग्विकल्पः प्रवर्तते, तेषामपि महामते तथागतानामर्हतां सम्यक्संबुद्धानामेवमेव चतुष्षष्ट्याकारो ब्रह्मस्वररुतघोषो वाग्विकल्पः प्रवर्ततेऽनूनानधिका निर्विशिष्टाः कलविङ्कब्रह्मस्वररुतघोषस्वभावेन। तत्र कतमा कायसमता ? यदुत अहं च ते च तथागता अर्हन्तः सम्यक्संबुद्धा धर्मकायेन च रूपलक्षणानुव्यञ्जनकायेन च समा निर्विशिष्टा अन्यत्र वैनेयवशमुपादाय। तत्र तत्र सत्त्वगतिविशेषेण तथागता रूपवैचित्र्यमादर्शयन्ति। तत्र धर्मसमता महामते कतमा ? यदुत ते च अहं च सप्तत्रिंशतां बोधिपक्ष्याणां धर्माणामधिगन्तारः। इमां महामते चतुर्विधां समतां संधाय तथागता अर्हन्तः सम्यक्संबुद्धाः पर्षन्मध्यगता वाचं निश्चारयन्ति ॥

तत्रेदमुच्यते—

काश्यपः ककुछन्दश्च कोनाकमुनिरप्यहम्।
भाषामि जिनपुत्राणां समतायां संमुद्गतः[1] ॥ ६ ॥

N 143 पुनरपि महामतिराह—यदिदमुक्तं भगवता—यां च रात्रिं तथागतोऽभिसंबुद्धो यां च रात्रिं परिनिर्वास्यति, अत्रान्तरे एकमप्यक्षरं तथागतेन नोदाहृतम्, न प्रव्याहरिष्यति, अवचनं बुद्धवचनमिति, तत्किमिदं संधायोक्तं तथागतेनार्हता सम्यक्संबुद्धेन अवचनं बुद्धवचनमिति ? भगवानाह—धर्मद्वयं महामते संधाय मयैतदुक्तम्। कतमद्धर्मद्वयम् ? यदुत प्रत्यात्मधर्मतां च संधाय पौराणस्थितिधर्मतां च। इदं महामते धर्मद्वयं संधायेदमुक्तं मया। तत्र स्वप्रत्यात्मधर्मतानुसंधिः कतमः[2] ? यत्तैस्तथागतैरधिगतं तन्मयाप्यधिगतमनूनमनधिकं स्वप्रत्यात्मगतिगोचरं वाग्विकल्परहितमक्षरगतिद्वयविनिर्मुक्तम्। तत्र पौराणस्थितिधर्मता कतमा ? यदुत पौराणमिदं महामते धर्मतावन्मे हिरण्यरजतमुक्ताकरवन्महामते धर्मधातुस्थितिता—उत्पादाद्वा तथागतानामनुत्पादाद्वा तथागतानां स्थितैवैषां धर्माणां धर्मता धर्मस्थितिता धर्मनियामता। पौराणनगरपथवन्महामते। तद्यथा महामते कश्चिदेव पुरुषोऽटव्यां पर्यटन् पौराणं नगरमनुपश्येदविकलपथप्रवेशम्। स तं नगरमनुप्रविशेत्। तत्र प्रविश्य प्रतिनिविश्य

---

१ T समं गतः for समुद्गतः. २ N कतमत्तैः for कतमः यत्तैः which is based upon T.

नगरं नगरक्रियासुखमनुभवेत् । तत्किं मन्यसे महामते अपि नु तेन पुरुषेण स पन्था N 144
उत्पादितो येन पथा तं नगरमनुप्रविष्टो नगरवैचित्र्यं च [अनुभूतम्]? आह–नो भगवन् । भगवानाह–एवमेव महामते यन्मया तैश्च तथागतैरधिगतम्–स्थितैवैषा धर्मता धर्मस्थितिता धर्मनियामता तथता भूतता सत्यता । अत एतस्मात्कारणान्महामते मयेदमुक्तम्–यां च रात्रिं तथागतोऽभिसंबुद्धो यां च रात्रिं परिनिर्वास्यति, अत्रान्तरे एकमप्यक्षरं तथागतेन नोदाहृतं नोदाहरिष्यति ॥

तत्रेदमुच्यते–

यस्यां च रात्र्यां धिगमो यस्यां च परिनिर्वृतः ।
एतस्मिन्नन्तरे नास्ति मया किंचित्प्रकाशितम् ॥ ७ ॥
प्रत्यात्मधर्मस्थिततां संधाय कथितं मया ।
तैश्च बुद्धैर्मया चैव न च किंचिद्विशेषितम् ॥ ८ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमध्येषते स्म–देशयतु मे भगवान्नास्त्यस्तित्वलक्षणं सर्वधर्माणां यथा अहं च अन्ये च बोधिसत्त्वा महासत्त्वा नास्त्य-
स्तित्ववर्जिताः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्येरन् । भगवानाह–तेन हि महामते N 145
शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवानेतदवोचत्–द्वयनिश्रितोऽयं महामते लोको यदुत अस्तित्वनिश्रितश्च नास्तित्वनिश्रितश्च । भावाभावच्छन्ददृष्टिपतितश्च अनिःशरणे निःशरण-बुद्धिः । तत्र महामते कथमस्तित्वनिश्रितो लोकः ? यदुत विद्यमानैर्हेतुप्रत्ययैर्लोक उत्पद्यते नाविद्यमानैः, विद्यमानं चोत्पद्यमानमुत्पद्यते नाविद्यमानम् । स चैवं ब्रुवन् महामते भावानामस्तित्वहेतुप्रत्ययानां लोकस्य च हेत्वस्तिवादी भवति । तत्र महामते कथं नास्ति-त्वनिश्रितो भवति ? यदुत रागद्वेषमोहाभ्युपगमं कृत्वा पुनरपि रागद्वेषमोहभावाभावं विकल्पयति । यश्च महामते भावानामस्तित्वं नाभ्युपैति भावलक्षणविविक्तत्वात्, यश्च बुद्धश्रावकप्रत्येकबुद्धानां रागद्वेषमोहान्नाभ्युपैति भावलक्षणविनिर्मुक्तत्वाद्विद्यन्ते नेति ।
कतमोऽत्र महामते वैनाशिको भवति ? महामतिराह–य एष भगवन् अभ्युपगम्य N 146
रागद्वेषमोहान् न पुनरभ्युपैति । भगवानाह–साधु साधु महामते, साधु खलु पुनस्त्वं महामते, यस्त्वमेवं प्रभाषितः । केवलं महामते न रागद्वेषमोहभावाभावाद्वैनाशिको भवति । बुद्धश्रावकप्रत्येकबुद्धवैनाशिकोऽपि भवति । तत्कस्य हेतोः ? यदुत अध्यात्मबहिर्धानुपलब्धि-त्वाच्च क्लेशानाम् । न हि महामते रागद्वेषमोहा अध्यात्मबहिर्धोपलभ्यन्तेऽशरीरत्वात् । अनभ्युपगमत्वाच्च महामते रागद्वेषमोहाभावानां बुद्धश्रावकप्रत्येकबुद्धवैनाशिको भवति । प्रकृतिविमुक्तास्ते बुद्धश्रावकप्रत्येकबुद्धा बन्ध्यबन्धहेत्वभावात् । बन्ध्ये सति महामते बन्धो भवति बन्धहेतुश्च । एवमपि ब्रुवन् महामते वैनाशिको भवति । इदं महामते नास्त्यस्तित्वस्य लक्षणम् । इदं च महामते संधायोक्तं मया–वरं खलु सुमेरुमात्रा पुद्गलदृष्टिर्न त्वेव नास्त्यस्तित्वाभिमानिकस्य शून्यतादृष्टिः । नास्त्यस्तित्वाभिमानिको हि महामते वैनाशिको

भवति। स्वसामान्यलक्षणदृष्टिपतिताशयः स्वचित्तदृश्यमात्राभावान्न प्रतिजानन्, अप्रतिज्ञाना-
N 147 द्ग्राह्यभावान्नित्यदर्शनात्क्षणपरंपराभेदभिन्नानि स्कन्धधात्वायतनानि संततिप्रबन्धेन विनिवृत्य
विनिवर्तन्त इति कल्पाक्षररहितानि प्रतिविकल्पयन् पुनरपि वैनाशिको भवति ॥

तत्रेदमुच्यते—

अस्तिनास्तीत्युभावन्तौ यावच्चित्तस्य गोचरः।
गोचरेण निरुद्धेन सम्यक्चित्तं निरुध्यते ॥ ९ ॥
विषये ग्रहणाभावान्निरोधो न च नास्ति च।
विद्यते तथतावस्तु आर्याणां गोचरो यथा ॥ १० ॥
अभूत्वा यस्य उत्पादो भूत्वा वापि विनश्यति।
प्रत्ययैः सदसच्चापि न ते मे शासने स्थिताः ॥ ११ ॥
न तीर्थकैर्न बुद्धैश्च न मया न च केनचित्।
प्रत्ययैः साध्यतेऽस्तित्वं कथं नास्ति भविष्यति ॥ १२ ॥
केन प्रसाधितास्तित्वं प्रत्ययैर्यस्य नास्तिता।
उत्पादवाददुर्दृष्ट्या नास्त्यस्तीति विकल्प्यते ॥ १३ ॥
यस्य नोत्पद्यते किंचिन्न च किंचिन्निरुध्यते।
तस्यास्तिनास्ति नोपैति विविक्तं पश्यतो जगत् ॥ १४ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमध्येषते—देशयतु मे
N 148 भगवान्, देशयतु मे सुगतः, देशयतु मे तथागतोऽर्हन् सम्यक्संबुद्धो वदतां वरिष्ठः सिद्धान्तनयलक्षणम्, येन सिद्धान्तनयलक्षणेन सुप्रतिविभागविद्धेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वाः सिद्धान्तनयलक्षणगतिंगताः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते, अपरप्रणेयाश्च भविष्यन्ति सर्वतार्किकतीर्थकराणाम्। भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत्। भगवांस्तस्यैतदवोचत्—द्विविधं महामते सिद्धान्तनयलक्षणं सर्वश्रावकप्रत्येकबुद्धबोधिसत्त्वानां यदुत सिद्धान्तनयश्च देशनानयश्च। तत्र सिद्धान्तनयो महामते यदुत प्रत्यात्माधिगमविशेषलक्षणं वाग्विकल्पाक्षररहितमनास्रवधातुगतिप्रापकं प्रत्यात्मगतिभूमिगतिस्वलक्षणं सर्वतर्कतीर्थ्यमारवर्जितम्। विनिहत्य च तांस्तीर्थ्यमारान् प्रत्यात्मगतिर्विराजते। एतन्महामते सिद्धान्तनयलक्षणम्। तत्र देशनानयः कतमः? यदुत नवाङ्गशासनविचित्रोपदेशोऽन्यानन्यसदसत्पक्षवर्जितः उपायकुशलविधिपूर्वकः सत्त्वेषु दर्शनावतारः। यद्येनाधिमुच्यते तत्तस्य देशयेत्। एतन्महामते देशनानयलक्षणम्। अत्र
N 149 महामते त्वया अन्यैश्च बोधिसत्त्वैर्महासत्त्वैर्योगः करणीयः ॥

तत्रेदमुच्यते—

सिद्धान्तश्च नयश्चापि प्रत्यात्मशासनं च वै।
ये पश्यन्ति विभागज्ञा न ते तर्कवशं गताः ॥ १५ ॥

न भावो विद्यते सत्यं यथा बालैर्विकल्प्यते।
अभावेन तु वै मोक्षं कथं नेच्छन्ति तार्किकाः॥ १६॥
उत्पादभङ्गसंबद्धं संस्कृतं प्रतिपश्यतः।
दृष्टिद्वयं प्रपुष्णन्ति न पश्यन्ति विपर्ययात्॥ १७॥
एकमेव भवेत्सत्यं निर्वाणं मनवर्जितम्।
कदलीस्कन्धमायाभं लोकं पश्येद्विकल्पितम्॥ १८॥
रागो न विद्यते द्वेषो मोहश्चापि न पुद्गलः।
तृष्णाया ह्युदिताः स्कन्धा विद्यन्ते स्वप्नसादृशाः॥ १९॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमध्येषते स्म—देशयतु मे भगवान्, देशयतु मे सुगतः अभूतपरिकल्पस्य लक्षणम्। कथं किं केन कस्य भगवन् अभूतपरिकल्पः प्रवर्तमानः प्रवर्तते? अभूतपरिकल्पोऽभूतपरिकल्प इति भगवन्नुच्यते। कतमस्यैतद्भगवन् धर्मस्याधिवचनं यदुत अभूतपरिकल्प इति? किं वा प्रतिविकल्पयन् अभूतपरिकल्पो भवति? भगवानाह—साधु साधु महामते। साधु खलु पुनस्त्वं महामते, N 150
यत्त्वमेतमर्थमध्येषितव्यं मन्यसे। बहुजनहिताय त्वं महामते प्रतिपन्नो बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत्। भगवांस्तस्यैतदवोचत्—अर्थविविधवैचित्र्याभूतपरिकल्पाभिनिवेशान्महामते विकल्पः प्रवर्तमानः प्रवर्तते। नृणां ग्राह्यग्राहकाभिनिवेशाभिनिविष्टानां च महामते स्वचित्तदृश्यमात्रानवधारितमतीनां च सदसदृष्टिपक्षपतितानां च महामते तीर्थकरदृष्टिप्रतिविकल्पवासनाप्रतिपुष्टानां बाह्यविचित्रार्थोपलम्भाभिनिवेशाच्चित्त- N 151
चैत्तकलापो विकल्पसंशब्दितः प्रवर्तमानः प्रवर्तते आत्मात्मीयाभिनिवेशात्। महामतिराह—तद्यदि भगवन्नर्थविविधवैचित्र्याभूतपरिकल्पाभिनिवेशान्नृणां विकल्पः प्रवर्तमानः प्रवर्तते सदसद्दृष्टिपक्षपतितानां ग्राह्यग्राहकतीर्थकरदृष्टिप्रतिविकल्पपुष्टानां बाह्यविचित्रार्थोपलम्भाभिनिवेशाच्चित्तचैत्तकलापो विकल्पसंशब्दितः स्वचित्तदृश्यमात्रानवबोधात्सन्तासन्तविचित्रभावाभिनिवेशात्प्रवर्तमानः प्रवर्तते। तद्यथैव भगवन् बाह्यार्थविचित्रलक्षणः सदसत्पक्षपतितलक्षणो भावाभावविविक्तो दृष्टिलक्षणविनिवृत्तः, तथैव भगवन् परमार्थप्रमाणेन्द्रियावयवदृष्टान्तहेतुलक्षणविनिवृत्तः। तत्कथं भगवन्नेकत्र विचित्रविकल्पोऽभूतार्थविचित्रभावाभिनिवेशं प्रतिविकल्पयन् प्रवर्तते, न पुनः परमार्थलक्षणाभिनिवेशं प्रतिविकल्पयन् प्रवर्तते विकल्पः? ननु भगवन् वि[1]षमहेतुवादस्तव प्रसज्यते एकत्र प्रवर्तते एकत्र नेति ब्रुवतः, सदसत्पक्षाश्रयाभिनिवेशश्च अभूतप्रतिविकल्पदृष्टिप्रवृत्तिं ब्रुवतो विविधमायाङ्गपुरुषवैचित्र्यान्निष्पन्नैकरूपवत्प्रतिविकल्पयन् विकल्पेन लक्षणवैचित्र्यभावाभावं च विकल्पस्य विनिवृत्तेर्लोका-

१ N विषयमहेतु° for विषमहेतु° which is based on C and T,

यतिकदृष्ट्याशयपतितश्च। भगवानाह—न हि महामते विकल्पः प्रवर्तते निवर्तते वा। तत्कस्य
हेतोः? यदुत सदसतो विकल्पस्याप्रवृत्तित्वाद्बाह्यदृश्यभावाभावात्स्वचित्तदृश्यमात्रावबोधा-
N 152 न्महामते विकल्पो न प्रवर्तते न निवर्तते। अन्यत्र महामते बालानां स्वचित्तवैचित्र्य-
विकल्पकल्पितत्वात्। [1]क्रियाप्रवृत्तिपूर्वको विकल्पो वैचित्र्यभावलक्षणाभिनिवेशात्प्रवर्तत इति
वदामि। कथं खलु महामते बालपृथग्जनाः स्वविकल्पचित्तमात्रावबोधादात्मात्मीयाभिवि-
निवृत्तदृष्टयः कार्यकारणप्रत्ययविनिवृत्तदोषाः स्वचित्तमात्रावबोधात्परावृत्तचित्ताश्रयाः सर्वासु
भूमिषु कृतविद्यास्तथागतस्वप्रत्यात्मगतिगोचरं पञ्चधर्मस्वभाववस्तुदृष्टिविकल्पविनिवृत्तिं प्रति-
लभेरन्? अत एतस्मात्कारणान्महामते इदमुच्यते मया—विकल्पोऽभूतार्थवैचित्र्यादभिनिवेशा-
त्प्रवर्तते, स्वविकल्पवैचित्र्यार्थयथाभूतार्थपरिज्ञानाद्विमुच्यत इति॥

तत्रेदमुच्यते—

कारणैः प्रत्ययैश्चापि येषां लोकः प्रवर्तते।
चातुष्कोटिकया युक्ता न ते मन्नयकोविदाः॥ २०॥
असन्न जायते लोको न सन्न सदसन् क्वचित्।
प्रत्ययैः कारणैश्चापि यथा बालैर्विकल्प्यते॥ २१॥
न सन्नासन्न सदसद्यदा लोकं प्रपश्यति।
N 153 तदा व्यावर्तते चित्तं नैरात्म्यं चाधिगच्छति॥ २२॥
अनुत्पन्नाः सर्वभावा यस्मात्प्रत्ययसंभवाः।
कार्यं हि प्रत्ययाः सर्वे न कार्याज्जायते भवः॥ २३॥
कार्यान्न जायते कार्यं द्वित्वं कार्ये प्रसज्यते।
न च द्वित्वप्रसङ्गेन कार्याद्भावोपलभ्यते॥ २४॥
आलम्बालम्ब्यविगतं यदा पश्यति संस्कृतम्।
निश्चितं चित्तमात्रं हि चित्तमात्रं वदाम्यहम्॥ २५॥
मात्रा स्वभावसंस्थानं प्रत्ययैर्भाववर्जितम्।
निष्ठाभावः परं ब्रह्म एतां मात्रां वदाम्यहम्॥ २६॥
प्रज्ञप्तिसत्यतो ह्यात्मा द्रव्यसन्न हि विद्यते।
स्कन्धानां स्कन्धता तद्वत्प्रज्ञप्त्या न तु द्रव्यतः॥ २७॥
चतुर्विधा वै समता लक्षणं हेतुभावजम्।
नैरात्म्यसमता चैव चतुर्थं योगयोगिनाम्॥ २८॥
व्यावृत्तिः सर्वदृष्टीनां कल्प्यकल्पनवर्जिता।
अनुपलम्भो ह्यजातिश्च चित्तमात्रं वदाम्यहम्॥ २९॥

---

१ N प्रक्रिया° for क्रिया°.

न भावं नापि चाभावं भावाभावविवर्जितम् ।
तथता चित्तविनिर्मुक्तं चित्तमात्रं वदाम्यहम् ॥ ३० ॥
तथताशून्यताकोटि निर्वाणं धर्मधातुकम् । N 154
कायं मनोमयं चित्रं चित्तमात्रं वदाम्यहम् ॥ ३१ ॥
विकल्पवासनाबद्धं विचित्रं चित्तसंभवम् ।
बहिराख्यायते नृणां चित्तमात्रं हि लौकिकम् ॥ ३२ ॥
दृश्यं न विद्यते बाह्यं चित्तं चित्रं हि दृश्यते ।
देहभोगप्रतिष्ठानं चित्तमात्रं वदाम्यहम् ॥ ३३ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—यत्पुनरेतदुक्तं भगवता—यथारुतार्थग्रहणं न कर्तव्यं बोधिसत्त्वेन महासत्त्वेन अन्यैश्चेति । कथं च भगवन् बोधिसत्त्वो महासत्त्वो यथारुतार्थग्राही न भवति ? किं च रुतम् ? कोऽर्थः ? भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्—तत्र रुतं महामते कतमत् ? यदुत वागक्षरसंयोगविकल्पो दन्तहनुतालुजिह्वौष्ठपुटविनिःसृतपरस्परजल्पो विकल्पवासनाहेतुको रुतमित्युच्यते । तत्र अर्थः पुनर्महामते कतमः ? यदुत श्रुतचिन्ताभावनामय्या प्रज्ञया एको रहोगतो निर्वाणपुरगामिमार्गः स्वबुद्ध्या वासनाश्रयपरावृत्तिपूर्वकः स्वप्रत्यात्मगतिगोचरभूमिस्थानान्तरविशेषार्थलक्षणगतिं प्रविचारयन् बोधिसत्त्वो महासत्त्वोऽर्थकुशलो भवति ॥

पुनरपरं महामते रुतार्थकुशलो बोधिसत्त्वो महासत्त्वो रुतमर्थादन्यन्नान्यदिति N 155
समनुपश्यति, अर्थं च रुतात् । यदि च पुनर्महामते अर्थो रुतादन्यः स्यात्, अरुतार्थाभिव्यक्तिहेतुकः स्यात् । स चार्थो रुतेनानुप्रविश्यते प्रदीपेनेव धनम् । तद्यथा महामते कश्चिदेव पुरुषः प्रदीपं गृहीत्वा धनमवलोकयेत्—इदं मे धनमेवंविधमस्मिन् प्रदेशे इति । एवमेव महामते वाग्विकल्परुतप्रदीपेन बोधिसत्त्वा महासत्त्वा वाग्विकल्परहिताः स्वप्रत्यात्मार्यगतिमनुप्रविशन्ति ॥

पुनरपरं महामते अनिरुद्धा अनुत्पन्नाः प्रकृतिपरिनिर्वृतास्त्रियानमेकयानं च पञ्चचित्तस्वभावादिषु यथारुतार्थाभिनिवेशं प्रतीत्य अभिनिवेशतः समारोपापवाददृष्टिपतितो
भवति । अन्यथा व्यवस्थितानन्यथा प्रतिविकल्पयन् मायावैचित्र्यदर्शनविकल्पनवत् । N 156
तद्यथा महामते अन्यथा हि मायावैचित्र्यं द्रष्टव्यमन्यथा प्रतिकल्प्यते बालैर्न त्वार्यैः ॥

तत्रेदमुच्यते—

यथारुतं विकल्पित्वा समारोपेन्ति धर्मताम् ।
ते च वै तत्समारोपात्पतन्ति नरकालये ॥ ३४ ॥

न ह्यात्मा विद्यते स्कन्धैः स्कन्धाश्चैव हि नात्मनि ।
न ते यथा विकल्प्यन्ते न च ते वै न सन्ति च ॥ ३५ ॥
अस्तित्वं सर्वभावानां यथा बालैर्विकल्प्यते ।
यदि ते भवेद्यथा[1]दृष्टाः सर्वे स्युस्तत्त्वदर्शिनः ॥ ३६ ॥
अभावात्सर्वधर्माणां संक्लेशो नास्ति [2]शुद्धितः ।
न ते तथा यथा दृष्टा न च ते वै न सन्ति च ॥ ३७ ॥

पुनरपरं महामते ज्ञानविज्ञानलक्षणं ते उपदेक्ष्यामि, येन ज्ञानविज्ञानलक्षणेन
सुप्रतिविभागविद्धेन त्वं च अन्ये च बोधिसत्त्वा महासत्त्वा ज्ञानविज्ञानलक्षणगतिंगताः
क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते । तत्र महामते त्रिप्रकारं ज्ञानं लौकिकं लोकोत्तरं
N 157 च लोकोत्तरतमं च । तत्रोत्पन्नप्रध्वंसि विज्ञानम्। अनुत्पन्नप्रध्वंसि ज्ञानम्। पुनरपरं
महामते निमित्तानिमित्तपतितं विज्ञानं नास्त्यस्तिवैचित्र्यलक्षणहेतुकं च । निमित्तानिमित्त-
व्यतिक्रान्तलक्षणं ज्ञानम्। पुनरपरं महामते उपचयलक्षणं विज्ञानम्। अपचयलक्षणं ज्ञानम्।
तत्र त्रिविधं ज्ञानं स्वसामान्यलक्षणावधारकं च उत्पादव्ययावधारकं च अनुत्पादानिरोधा-
वधारकं च । तत्र लौकिकं ज्ञानं सदसत्पक्षाभिनिविष्टानां सर्वतीर्थकरबालपृथग्जनानां च ।
तत्र लोकोत्तरं ज्ञानं सर्वश्रावकप्रत्येकबुद्धानां च स्वसामान्यलक्षणपतिताशयाभिनिविष्टानाम्।
तत्र लोकोत्तरतमं ज्ञानं बुद्धबोधिसत्त्वानां निराभासधर्मप्रविचयादनिरोधानुत्पाददर्शनात्सदस-
त्पक्षविगतं तथागतभूमिनैरात्म्याधिगमात्प्रवर्तते ॥

पुनरपरं महामते असङ्गलक्षणं ज्ञानम्, विषयवैचित्र्यसङ्गलक्षणं च विज्ञानम्।
पुनरपरं महामते त्रिसङ्गक्षयोत्पादयोगलक्षणं विज्ञानमसङ्गस्वभावलक्षणं ज्ञानम्। पुनरपरं
N 158 महामते अप्राप्तिलक्षणं ज्ञानं स्वप्रत्यात्मार्यज्ञानगतिगोचरमप्रवेशानिर्गमत्वादुदकचन्द्रवज्जले ॥

तत्रेदमुच्यते—

चित्तेन चीयते कर्म ज्ञानेन च विधीयते ।
प्रज्ञया च निराभासं प्रभावं चाधिगच्छति ॥ ३८ ॥
चित्तं विषयसंबद्धं ज्ञानं तर्के प्रवर्तते ।
निराभासे विशेषे च प्रज्ञा वै संप्रवर्तते ॥ ३९ ॥
चित्तं मनश्च विज्ञानं संज्ञावैकल्पवर्जिताः ।
विकल्पधर्मतां प्राप्ताः श्रावका न जिनात्मजाः ॥ ४० ॥
शान्ते क्षान्तिविशेषे वै ज्ञानं ताथागतं शुभम्।
संजायते विशेषार्थं समुदाचारवर्जितम्॥ ४१ ॥
प्रज्ञा हि त्रिविधा मह्यं आर्या येन प्रभाविता ।
लक्षणं कल्प्यते येन यश्च भावान् वृणोति च ॥ ४२ ॥

---

१ N यथा दृष्ट्याः for यथादृष्टाः. २ N शुद्धिश्च for शुद्धितः.

यानद्वयविसंयुक्ता प्रज्ञा ह्याभावविवर्जिता ।
सद्भावाभिनिवेशेन श्रावकाणां प्रवर्तते ।
चित्तमात्रावतारेण प्रज्ञा ताथागती मता ॥ ४३ ॥

पुनरपरं महामते नवविधा परिणामवादिनां तीर्थकराणां परिणामदृष्टिर्भवति यदुत संस्थानपरिणामो लक्षणपरिणामो हेतुपरिणामो युक्तिपरिणामो दृष्टिपरिणाम उत्पादपरिणामो भावपरिणामः प्रत्ययाभिव्यक्तिपरिणामः क्रियाभिव्यक्तिपरिणामः । एता महामते नव परिणामदृष्टयः, याः संधाय सर्वतीर्थकराः सदसत्पक्षोत्पादपरिणामवादिनो भवन्ति ॥ N 159

तत्र महामते संस्थानपरिणामो यदुत संस्थानस्यान्यथाभावदर्शनात्, सुवर्णस्य भूषणविकृतिवैचित्र्यदर्शनवत् । तद्यथा महामते सुवर्णं[1] कटकरुचकस्वस्त्यादिपरिणामेन परिणाम्यमानं विचित्रसंस्थानपरिणतं दृश्यते । न सुवर्णं भावतः परिणमति । एवमेव महामते सर्वभावानां परिणामः कैश्चित्तीर्थकरैर्विकल्प्यते अन्यैश्च कारणतः । न च ते तथा, न चान्यथा परिकल्पमुपादाय । एवं सर्वपरिणामभेदो द्रष्टव्यो दधिक्षीरमद्यफलपाकवत् । तद्यथा महामते एवं दधिक्षीरमद्यफलादीनामेकैकस्य परिणामो विकल्पस्य परिणामो विकल्प्यते तीर्थकरैः, न चात्र कश्चित्परिणमति सदसतोः स्वचित्तदृश्यबाह्यभावाभावात्, एवमेव महामते बालपृथग्जनानां स्वचित्तविकल्पभावनाप्रवृत्तिर्द्रष्टव्या । नात्र महामते कश्चिद्धर्मः प्रवर्तते वा निवर्तते वा, मायास्वप्नप्रवृत्तरूपदर्शनवत् । तद्यथा महामते स्वप्ने प्रवृत्तिनिवृत्ती उपलभ्येते वन्ध्यापुत्रमृतजन्मवत् ॥ N 160

तत्रेदमुच्यते–

परिणामं कालसंस्थानं भूतभावेन्द्रियेषु च ।
अन्तराभवसंग्राह्यो ये कल्पेन्ति न ते बुधाः ॥ ४४ ॥
न प्रतीत्यसमुत्पन्नं लोकं कल्पेन्ति वै जिनाः ।
किं तु प्रत्यय एवेदं लोकं गन्धर्वसंनिभम् ॥ ४५ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तं सर्वधर्मसंध्यर्थपरिमोचनार्थमध्येषते स्म–देशयतु मे भगवान्, देशयतु मे तथागतोऽर्हन् सम्यक्संबुद्धः सर्वधर्माणां संध्यसंधिलक्षणम्, येन संध्यसंधिलक्षणेन सुप्रतिविभागाभिविद्धेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वाः सर्वसंध्यसंध्युपायकुशला यथारुतार्थाभिनिवेशसंधौ न प्रपतेयुः । सर्वधर्माणां संध्यसंधिकौशलेन वागक्षरप्रतिविकल्पनं च विनिहत्य बुद्ध्या सर्वबुद्धक्षेत्रपर्षच्चारिणो बलवशिताभिज्ञाधारणीमुद्रासुमुद्रिता विचित्रैर्निर्माणकिरणैर्दशनिष्ठापादे सुनिबद्धबुद्धयोऽनाभोगचन्द्रसूर्यमणिमहाभूतचर्यागतिसमाः सर्वभूमिषु स्वविकल्पलक्षणविनिवृत्तदृष्टयः स्वप्नमायादिसर्वधर्मानुदर्शनाद्बुद्धभूम्याश्रयानुप्रविष्टाः सर्वसत्त्वधातुं यथार्हत्त्वधर्मदेशनया[2] N 161

---

१ N सुवर्ण for सुवर्णं. २ N यथार्हद्धर्म° for यथार्हत्त्वधर्म°.

आकृष्य स्वप्नमायादिसर्वधर्मसदसत्पक्षवर्जिते भङ्गोत्पादविकल्परहिते रुतान्यथापर्यायवृत्त्याश्रयतया प्रतिष्ठापयेयुः। भगवानाह–साधु साधु महामते। तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत्। भगवांस्तस्यैतदवोचत्–अपरिमितो महामते सर्वधर्माणां यथारुतार्थाभिनिवेशसंधिः, लक्षणाभिनिवेशसंधिः, प्रत्ययाभिनिवेशसंधिः, भावाभावाभिनिवेशसंधिः, उत्पादानुत्पादविकल्पाभिनिवेशसंधिः, निरोधानिरोधाभिनिवेशप्रतिविकल्पसंधिः, यानायानाभिनिवेशप्रतिविकल्पसंधिः, संस्कृतासंस्कृतप्रतिविकल्पाभिनिवेशसंधिः, भूम्यभूमिस्वलक्षणविकल्पाभिनिवेशसंधिः, स्वविकल्पाभिसमयविकल्पसंधिः, सदसत्पक्षतीर्थ्याश्रयप्रतिविकल्पसंधिः, त्रियानैक-
N 162 यानाभिसमयविकल्पसंधिः। एते चान्ये च महामते बालपृथग्जनानां स्वविकल्पसंधयः, यां संधिं संधाय बालपृथग्जनाः प्रतिविकल्पयमानाः कौशेयक्रिमय इव स्वविकल्पदृष्टिसंधिसूत्रेण आत्मानं परांश्च स्वविकल्पदृष्टिसंधिसूत्ररोचनतया परिवेष्टयन्ति भावाभावसंधिलक्षणाभिनिवेशाभिनिविष्टाः। न चात्र महामते कश्चित्संधिर्न संधिलक्षणं विविक्तदर्शनात्सर्वधर्माणाम्। विकल्पस्याप्रवृत्तत्वान्महामते बोधिसत्त्वो महासत्त्वः सर्वधर्मेषु विविक्तदर्शी विहरति॥

पुनरपरं महामते बाह्यभावाभावस्वचित्तदृश्यलक्षणाववोधान्निराभासचित्तमात्रानुसारित्वात्सदसतोः सर्वभावविकल्पसंधिविविक्तदर्शनान्न संधिर्नासंधिलक्षणं सर्वधर्माणाम्। नात्र कश्चिन्महामते बध्यते न च मुच्यते, अन्यत्र वितथपतितया बुद्ध्या बन्धमोक्षौ प्रज्ञायेते। तत्कस्य हेतोः? यदुत सदसतोः संध्यनुपलब्धित्वात्सर्वधर्माणाम्॥

पुनरपरं महामते त्रयः संधयो बालानां पृथग्जनानां यदुत रागो द्वेषो मोहश्च। तृष्णा च पौनर्भविकी नन्दीरागसहगता यां संधाय गतिसंधयः प्रजायन्ते[1]। तत्र संधि-
N 163 संधानं सत्त्वानां गतिपञ्चकं संधेर्व्युच्छेदान्महामते नसंधिर्नासंधिलक्षणं प्रज्ञायते। पुनरपरं महामते त्रिसंगतिप्रत्ययक्रियायोगाभिनिवेशाय संधिः। विज्ञानानां नैरन्तर्याप्रवृत्तियोगेनाभिनिवेशतो भवसंधिर्भवति। त्रिसंगतिप्रत्ययव्यावृत्तेर्विज्ञानानां विमोक्षत्रयानुदर्शनात्सर्वसंधयो न प्रवर्तन्ते॥

तत्रेदमुच्यते–

अभूतपरिकल्पो हि संधिलक्षणमुच्यते।
तस्य भूतपरिज्ञानात्संधिजालं प्रसीदति॥ ४६॥
भावज्ञानरुतग्राहात्कौशेयक्रिमयो यथा।
बध्यन्ते स्वविकल्पेन बालाः संध्यविपश्चितः॥ ४७॥

पुनरपि महामतिराह–यत्पुनरेतदुक्तं भगवता–येन येन विकल्पेन ये ये भावा विकल्प्यन्ते, न हि स तेषां स्वभावो भवति। परिकल्पित एवासौ। तद्यदि भगवन् परि-

१ प्रज्ञायन्ते for प्रजायन्ते which is based on C and T.

कल्पित एवासौ न भावस्वभावलक्षणावधारणम्, ननु ते भगवन् एवं ब्रुवतः संक्लेशव्यवदानाभावः प्रसज्यते परिकल्पितस्वभावभावितत्वात्सर्वधर्माणाम् । भगवानाह–एवमेतन्महामते यथा वदसि । न महामते यथा बालपृथग्जनैर्भावस्वभावो विकल्प्यते, तथा भवति । N 164
परिकल्पित एवासौ महामते, न भावस्वभावलक्षणावधारणम् । किं तु यथा महामते आर्यैर्भावस्वभावोऽवधार्यते आर्येण ज्ञानेन आर्येण दर्शनेन आर्येण प्रज्ञाचक्षुषा तथा भावस्वभावो भवति ॥

महामतिराह–तद्यदि भगवन् यथा आर्यैरार्येण ज्ञानेन आर्येण दर्शनेन आर्येण प्रज्ञाचक्षुषा न दिव्यमांसचक्षुषा भावस्वभावोऽवधार्यते तथा भवति, न तु यथा बालपृथग्जनैर्विकल्प्यते भावस्वभावः, तत्कथं भगवन् बालपृथग्जनानां विकल्पव्यावृत्तिर्भविष्यति आर्यभाववस्त्वनवबोधात् ? न च ते भगवन् विपर्यस्ताः नाविपर्यस्ताः । तत्कस्य हेतोः ? यदुत आर्यवस्तुस्वभावानवबोधात्सदसतोर्लक्षणस्य वृत्तिदर्शनात् । आर्यैरपि भगवन् यथा वस्तु विकल्प्यते, न तथा भवति स्वलक्षणविषयागोचरत्वात् । स तेषामपि भगवन् भावस्वभावलक्षणः परिकल्पितस्वभाव एव ख्यायते हेत्वहेतुव्यपदेशात् । यदुत भावस्वलक्षणदृष्टिपतितत्वादन्येषां गोचरो भवति न यथा तेषाम् । इत्येवमनवस्था प्रसज्यते भगवन् भावस्वभावलक्षणानवबोधात् । न च भगवन् परिकल्पितस्वभावहेतुको भावस्वभावलक्षणः । स च कथं परिकल्पेन प्रतिविकल्प्यमानो न तथा भविष्यति यथा परिकल्प्यते ? अन्यदेव N 165
भगवन् प्रतिविकल्पस्य लक्षणम्, अन्यदेव स्वभावलक्षणम् । विसदृशहेतुके च भगवन् विकल्पस्वभावलक्षणे । ते च परस्परं परिकल्प्यमाने बालपृथग्जनैर्न तथा भविष्यतः । किं तु सत्त्वानां विकल्पव्यावृत्त्यर्थमिदमुच्यते । यथा प्रतिविकल्पेन विकल्प्यन्ते तथा न विद्यन्ते ॥

किमिदं भगवन् सत्त्वानां त्वया नास्त्यस्तित्वदृष्टिं विनिवार्य वस्तुस्वभावाभिनिवेशेन आर्यज्ञानगोचरविषयाभिनिवेशान्नास्तित्वदृष्टिः पुनर्निपात्यते, विविक्तधर्मोपदेशाभावश्च क्रियते आर्यज्ञानस्वभाववस्तुदेशनया ? भगवानाह–न मया महामते विविक्तधर्मोपदेशाभावः क्रियते, न चास्तित्वदृष्टिर्निपात्यते आर्यवस्तुस्वभावनिर्देशेन । किं तु उत्त्रासपदविवर्जनार्थं सत्त्वानां महामते मया अनादिकालभावस्वभावलक्षणाभिनिविष्टानामार्यज्ञानवस्तुस्वभावाभिनिवेशलक्षणदृष्ट्या विविक्तधर्मोपदेशः क्रियते । न मया महामते भावस्वभावोपदेशः क्रियते । किं तु महामते स्वयमेवाधिगतयाथातथ्यविविक्तधर्मविहारिणो भविष्यन्ति । भ्रान्तेर्निर्निमित्तदर्शनात् स्वचित्तदृश्यमात्रमवतीर्य बाह्यदृश्यभावाभावविनिवृत्तदृष्टयो विमोक्ष- N 166
त्रयाधिगतयाथातथ्यविविक्तधर्मविहारिणो भविष्यन्ति । भ्रान्तेर्निर्निमित्तदृष्टयो विमोक्षत्रयाधिगतयाथातथ्यमुद्रासुमुद्रिता भावस्वभावेषु प्रत्यात्माधिगतया बुद्ध्या प्रत्यक्षविहारिणो भविष्यन्ति नास्त्यस्तित्ववस्तुदृष्टिविवर्जिताः ॥

पुनरपरं महामते अनुत्पन्नाः सर्वधर्मा इति बोधिसत्त्वेन महासत्त्वेन प्रतिज्ञा न करणीया । तत्कस्य हेतोः ? प्रतिज्ञायाः सर्वस्वभावभावित्वात्तद्धेतुप्रवृत्तिलक्षणत्वाच्च । अनुत्पन्नान्

सर्वधर्मान् प्रतिज्ञाय प्रतिब्रुवन् महामते बोधिसत्त्वो महासत्त्वः प्रतिज्ञाया हीयते । या
प्रतिज्ञा—अनुत्पन्नाः सर्वधर्मा इति, सास्य प्रतिज्ञा हीयते, प्रतिज्ञायास्तदपेक्षोत्पत्तित्वात् ।
अथ सापि प्रतिज्ञा अनुत्पन्ना सर्वधर्माभ्यन्तरादनुत्पन्नलक्षणानुत्पत्तित्वात्प्रतिज्ञायाः, अनुत्पन्नाः
सर्वधर्मा इति स वादः प्रहीयते । प्रतिज्ञावयवकारणेन सदसतोऽनुत्पत्तिः प्रतिज्ञायाः ।
सा हि महामते प्रतिज्ञा सर्वभावाभ्यन्तरा सदसतोरनुत्पत्तिलक्षणात् । यदि महामते तया
N 167 प्रतिज्ञया अनुत्पन्नया अनुत्पन्नाः सर्वभावा इति प्रतिज्ञां कुर्वन्ति, एवमपि प्रतिज्ञाहानिः
प्रसज्यते । प्रतिज्ञायाः सदसतोरनुत्पत्तिभावलक्षणत्वात्प्रतिज्ञा न करणीया । अनुत्पन्नस्वभाव-
लक्षणा हि महामते तेषां प्रतिज्ञा भवति । अतस्ते महामते प्रतिज्ञा न करणीया । बहुदोष-
दुष्टत्वादवयवानां परस्परहेतुविलक्षणकृतकत्वाच्च अवयवानां प्रतिज्ञा न करणीया—यदुत
अनुत्पन्नाः सर्वधर्माः । एवं शून्या अस्वभावाः सर्वधर्मा इति महामते बोधिसत्त्वेन महासत्त्वेन
प्रतिज्ञा न करणीया । किं तु महामते बोधिसत्त्वेन महासत्त्वेन मायास्वप्नवत्सर्वभावोपदेशः
करणीयो दृश्यादृश्यलक्षणत्वात् । दृष्टिबुद्धिमोहनत्वाच्च सर्वधर्माणां मायास्वप्नवद्भावोपदेशः
करणीयोऽन्यत्र बालानामुत्त्रासपदविवर्जनतया । बालाः पृथग्जना हि महामते । नास्त्यस्तित्व-
दृष्टिपतितानां तेषामुत्त्रासः स्यान्मा इति । उत्त्रास्यमाना महामते दूरीभवन्ति महायानात् ॥

तत्रेदमुच्यते—

न स्वभावो न विज्ञप्तिर्न वस्तु न च आलयः ।
बालैर्विकल्पिता ह्येते शवभूतैः कुतार्किकैः ॥ ४८ ॥

N 168 अनुत्पन्नाः सर्वधर्माः सर्वतीर्थ्यप्रसिद्धये ।
न हि कस्यचिदुत्पन्ना भावा वै प्रत्ययान्विताः ॥ ४९ ॥

अनुत्पन्नाः सर्वधर्माः प्रज्ञया न विकल्पयेत् ।
तद्धेतुमत्त्वात्तत्सिद्धेर्बुद्धिस्तेषां प्रहीयते ॥ ५० ॥

केशोण्डुकं यथा मिथ्या गृह्यते तैमिरैर्जनैः ।
तथा भावविकल्पोऽयं मिथ्या बालैर्विकल्प्यते ॥ ५१ ॥

प्रज्ञप्तिमात्रात्त्रिभवं नास्ति वस्तुस्वभावतः ।
प्रज्ञप्तिवस्तुभावेन कल्पयिष्यन्ति तार्किकाः ॥ ५२ ॥

निमित्तं वस्तु विज्ञप्तिं मनोविस्पन्दितं च तत् ।
अतिक्रम्य तु पुत्रा मे निर्विकल्पाश्चरन्ति ते ॥ ५३ ॥

अजले च जलग्राहो मृगतृष्णा यथा नभे ।
दृश्यं तथा हि बालानामार्याणां च विशेषतः ॥ ५४ ॥

आर्याणां दर्शनं शुद्धं विमोक्षत्रयसंभवम् ।
उत्पादभङ्गनिर्मुक्तं निराभासप्रचारिणाम् ॥ ५५ ॥

निराभासो हि भावानामभावे नास्ति योगिनाम्।
भावाभावसमत्वेन आर्याणां जायते फलम्।
कथं ह्यभावो भावानां कुरुते समतां कथम्॥ ५६॥ N 169
यदा चित्तं न जानाति बाह्यमाध्यात्मिकं चलम्।
तदा तु कुरुते नाशं समताचित्तदर्शनम्॥ ५७॥

पुनरपि महामतिराह—यत्पुनरिदमुक्तं भगवता—यदा त्वालम्ब्यमर्थं नोपलभते ज्ञानं तदा विज्ञप्तिमात्रव्यवस्थानं भवति। विज्ञप्तेर्ग्राह्याभावाद्ग्राहकस्याप्यग्रहणं भवति। तदग्रहणान्न प्रवर्तते ज्ञानं विकल्पसंशब्दितम्। तत्किं पुनर्भगवन् भावानां स्वसामान्यलक्षणानन्यवैचित्र्यानवबोधान्नोपलभते ज्ञानम्? अथ स्वसामान्यलक्षणवैचित्र्यभावस्वभावाभिभवान्नोपलभते ज्ञानम्। अथ कुड्यकटवप्रप्राकारभूजलपवनाग्निव्यवहितातिदूरसामीप्यान्नोपलभते ज्ञानं ज्ञेयम्। अथ बालान्धवृद्धयोगादिन्द्रियाणां ज्ञेयार्थं नोपलभते ज्ञानम्। तद्यदि भगवन् स्वसामान्यलक्षणानन्यवैचित्र्यानवबोधान्नोपलभते ज्ञानम्, न तर्हि भगवन् ज्ञानं वक्तव्यम्। अज्ञानमेतद्भगवन् यद्विद्यमानमर्थं नोपलभते। अथ स्वसामान्यलक्षणवैचित्र्यभावस्वभावाभिभवान्नोपलभते ज्ञानम्, तदज्ञानमेव भगवन् न ज्ञानम्। [1]ज्ञेये सति भगवन् ज्ञानं प्रवर्तते N 170 नाभावात्। तद्योगाच्च ज्ञेयस्य ज्ञानमित्युच्यते। अथ कुड्यकटवप्रप्राकारभूजलपवनाग्निव्यवहितातिदूरसामीप्यान्नोपलभते बालवृद्धान्धयोगवद्वैकल्यादिन्द्रियाणां ज्ञानं नोपलभते। तद्यदेवं नोपलभते, न तद्भगवन् ज्ञानम्। अज्ञानमेव तद्विद्यमानमर्थं बुद्धिवैकल्यात्॥

भगवानाह—न हि तन्महामते एवमज्ञानं भवति। ज्ञानमेव तन्महामते, नाज्ञानम्। न चैतत्संधायोक्तं मया—यदा त्वालम्ब्यमर्थं नोपलभते ज्ञानं तदा विज्ञप्तिमात्रव्यवस्थानं भवतीति। किं तु स्वचित्तदृश्यमात्रावबोधात्सदसतोर्बाह्यभावाभावाज्ज्ञानमप्यर्थं नोपलभते। तदनुपलम्भाज्ज्ञानज्ञेययोरप्रवृत्तिः। विमोक्षत्रयानुगमाज्ज्ञानस्याप्यनुपलब्धिः। न च तार्किका अनादिकालभावाभावप्रपञ्चवासितमतय एवं प्रजानन्ति। ते चाप्रजानन्तो बाह्यद्रव्यसंस्थानलक्षणभावाभावं कृत्वा विकल्पस्याप्रवृत्तिं चित्तमात्रतां निर्देक्ष्यन्ति। आत्मात्मीयलक्षणग्राहाभिनिवेशाभिनिविष्टाः स्वचित्तदृश्यमात्रानवबोधाज्ज्ञानं ज्ञेयं प्रतिविकल्पयन्ति। ते च ज्ञान- N 171 ज्ञेयप्रतिविकल्पनया बाह्यभावाभावप्रविचयानुपलब्धेरुच्छेददृष्टिमाश्रयन्ते॥

तत्रेदमुच्यते—

विद्यमानं हि आलम्ब्यं यदि ज्ञानं न पश्यति।
अज्ञानं तद्धि न ज्ञानं तार्किकाणामयं नयः॥ ५८॥
अनन्यलक्षणाभावाज्ज्ञानं यदि न पश्यति।
व्यवधानदूरसामीप्यं मिथ्याज्ञानं तदुच्यते॥ ५९॥

---

१ N ज्ञाये for ज्ञेये.

बालवृद्धान्धयोगाच्च ज्ञानं यदि न जायते।
विद्यमानं हि तज्ज्ञेयं मिथ्याज्ञानं तदुच्यते॥ ६०॥

पुनरपरं महामते बालपृथग्जना अनादिकालप्रपञ्चदौष्ठुल्यस्वप्रतिविकल्पना नाटके
नृत्यन्तः स्वसिद्धान्तनयदेशनायामकुशलाः स्वचित्तदृश्यबाह्यभावलक्षणाभिनिविष्टा उपाय-
देशनापाठमभिनिविशन्ते, न स्वसिद्धान्तनयं चातुष्कोटिकनयविशुद्धं प्रतिविभावयन्ति।
महामतिराह—एवमेतद्भगवन् यथा वदसि। देशयतु मे भगवान् देशनासिद्धान्तनयलक्षणं
येन अहं च अन्ये च बोधिसत्त्वा महासत्त्वा अनागतेऽध्वनि देशनासिद्धान्तनयकुशला न
N 172 विप्रलभ्येरन् कुतार्किकैस्तीर्थकरश्रावकप्रत्येकबुद्धयानिकैः। भगवानाह—तेन हि महामते
शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। साधु भगवन्निति महामतिर्बोधिसत्त्वो
महासत्त्वो भगवतः प्रत्यश्रौषीत्। भगवांस्तस्यैतदवोचत्—द्विप्रकारो महामते अतीतानागत-
प्रत्युत्पन्नानां तथागतानामर्हतां सम्यक्संबुद्धानां धर्मनयो यदुत देशनानयश्च सिद्धान्तप्रत्यव-
स्थाननयश्च। तत्र देशनापाठनयो महामते यदुत विचित्रसंभारसूत्रोपदेशः। यथाचित्ता-
धिमुक्तिकतया देशयन्ति सत्त्वेभ्यः। तत्र सिद्धान्तनयः पुनर्महामते कतमः? येन योगिनः
स्वचित्तदृश्यविकल्पव्यावृत्तिं कुर्वन्ति यदुत एकत्वान्यत्वोभयत्वानुभयत्वपक्षापतनताचित्त-
मनोमनोविज्ञानातीतं स्वप्रत्यात्मार्यगतिगोचरं हेतुयुक्तिदृष्टिलक्षणविनिवृत्तमनालीढं सर्व-
कुतार्किकैस्तीर्थकरश्रावकप्रत्येकबुद्धयानिकैर्नास्त्यस्तित्वान्तद्वयपतितैः, तमहं सिद्धान्त इति
वदामि। एतन्महामते सिद्धान्तनयदेशनालक्षणं यत्र त्वया च अन्यैश्च बोधिसत्त्वैर्महासत्त्वै-
र्योगः करणीयः॥

तत्रेदमुच्यते—

नयो हि द्विविधो मह्यं सिद्धान्तो देशना च वै।
देशेमि या बालानां सिद्धान्तं योगिनामहम्॥ ६१॥

N 173 अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—उक्तमेत-
द्भगवंस्तथागतेनार्हता सम्यक्संबुद्धेन एकस्मिन् काले एकस्मिन् समये यथा लोकायतिको
विचित्रमन्त्रप्रतिभानो न सेवितव्यो न भक्तव्यो न पर्युपासितव्यः, यं च सेवमानस्य
लोकामिषसंग्रहो भवति न धर्मसंग्रह इति। किं कारणं पुनर्भगवतेदमुक्तं लोकायतिको
विचित्रमन्त्रप्रतिभानः, यं च सेवमानस्य लोकामिषसंग्रहो भवति न धर्मसंग्रहः? भगवानाह—
विचित्रमन्त्रप्रतिभानो महामते लोकायतिको विचित्रैर्हेतुपदव्यञ्जनैर्बालान् व्यामोहयति न
युक्तियुक्तं नार्थोपसंहितम्। अथ यावदेव यत्किंचिद्बालप्रलापं देशयति। एतेन महामते
कारणेन लोकायतिको विचित्रमन्त्रप्रतिभान इत्युच्यते। अक्षरवैचित्र्यसौष्ठवेन बाला-
नाकर्षति, न तत्त्वनयप्रवेशेन प्रविशति। स्वयं सर्वधर्मानवबोधादन्तद्वयपतितया दृष्ट्या बालान्
व्यामोहयति, स्वात्मानं च क्षिणोति। गतिसंध्यप्रमुक्तत्वात्स्वचित्तदृश्यमात्रानवबोधाद्बाह्य-
भावस्वभावाभिनिवेशाद्विकल्पस्य व्यावृत्तिर्न भवति। अत एतस्मात्कारणान्महामते लोका-

यतिको विचित्रमन्त्रप्रतिभानोऽपरिमुक्त एव जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्यो- N 174
पायासादिभ्यो विचित्रैः पदव्यञ्जनैर्हेतुदृष्टान्तोपसंहारैर्बालान् व्यामोहयति ॥

इन्द्रोऽपि महामते अनेकशास्त्रविदग्धबुद्धिः स्वशब्दशास्त्रप्रणेता । तच्छिष्येण नागवेशरूपधारिणा स्वर्गे इन्द्रसभायां प्रतिज्ञां कृत्वा तव वा सहस्रारो रथो भज्यतां मम वा एकैकनागभावस्य फणाच्छेदो भवत्विति । सहधर्मेण च नागवेशधारिणा लोकायतिकशिष्येण देवानामिन्द्रं विजित्य सहस्रारं रथं भङ्क्त्वा पुनरपीमं लोकमागतः । एवमिदं महामते लोकायतिकविचित्रहेतुदृष्टान्तोपनिबद्धं येन तिर्यञ्चोऽप्यधीत्य देवासुरलोकं विचित्रपदव्यञ्जनैर्व्यामोहयति । आयव्ययदृष्टाभिनिवेशेनाभिनिवेशयति किमङ्ग पुनर्मानुषान् । अत एतस्मात्कारणान्महामते लोकायतिकः परिवर्जितव्यो दुःखजन्महेतुवाहकत्वात्, न सेवितव्यो न भजितव्यो न पर्युपासितव्यः । शरीरबुद्धिविषयोपलब्धिमात्रं हि महामते लोकायतिकैर्देश्यते विचित्रैः पदव्यञ्जनैः । शतसहस्रं महामते लोकायतम् । किं तु पश्चिमे N 175
लोके पश्चिमायां पञ्चाशत्यां भिन्नसंहितं भविष्यति कुतर्कहेतुदृष्टिप्रणीतत्वात् । भिन्नसंहितं भविष्यत्यशिष्यपरिग्रहात् । एतदेव महामते लोकायतं भिन्नसंहितं विचित्रहेतूपनिबद्धं तीर्थकरैर्देश्यते स्वकारणाभिनिवेशाभिनिविष्टैः, न स्वनयः । न च महामते कस्यचित्तीर्थकरस्य स्वशास्त्रनयः । अन्यत्र लोकायतमेव अनेकैराकारैः कारणमुखशतसहस्रैर्देशयन्ति । न स्वनयं च न प्रजानन्ति मोहोहाल्लोकायतमिदमिति ॥

महामतिराह—यदि भगवन् सर्वतीर्थकरा लोकायतमेव विचित्रैः पदव्यञ्जनैर्दृष्टान्तोपसंहारैर्देशयन्ति, न स्वनयं स्वकारणाभिनिवेशाभिनिविष्टाः, अथ किं भगवानपि लोकायतमेव देशयति आगतागतानां नानादेशसंनिपतितानां देवासुरमनुष्याणां विचित्रैः पदव्यञ्जनैः, न स्वमतं सर्वतीर्थ्यमतोपदेशाभ्यन्तरत्वात् ? भगवानाह—नाहं महामते लोकायतं देशयामि न चायव्ययम् । किं तु महामते अनायव्ययं देशयामि । तत्र आयो नाम महामते उत्पादराशिः समूहागमादुत्पद्यते[1] । तत्र व्ययो नाम महामते विनाशः । अनायव्यय इत्यनुत्पादस्यैतदधिवचनम् । नाहं महामते सर्वतीर्थकरविकल्पाभ्यन्तरं देशयामि । तत्कस्य हेतोः ? N 176
यदुत बाह्यभावाभावादनभिनिवेशात्स्वचित्तदृश्यमात्रावस्थानाद्द्विधावृत्तिनोऽप्रवृत्तेर्विकल्पस्य । निमित्तगोचराभावात्स्वचित्तदृश्यमात्रावबोधनात्स्वचित्तदृश्यविकल्पो न प्रवर्तते । अप्रवृत्तिविकल्पस्यानिमित्तशून्यताप्रणिहितविमोक्षत्रयावतारान्मुक्त इत्युच्यते ॥

अभिजानाम्यहं महामते अन्यतरस्मिन् पृथिवीप्रदेशे विहरामि । अथ येनाहं तेन लोकायतिको ब्राह्मण उपसंक्रान्तः । उपसंक्रम्य अकृतावकाश एव मामेवमाह—सर्वं भो गौतम कृतकम् । तस्याहं महामते एवमाह—सर्वं भो ब्राह्मण यदि कृतकम्, इदं प्रथमं लोकायतम् । सर्वं भो गौतम अकृतकम् । यदि ब्राह्मण सर्वमकृतकम्, इदं द्वितीयं लोकायतम् । एवं सर्वमनित्यं सर्वं नित्यं सर्वमुत्पाद्यं सर्वमनुत्पाद्यम् । इदं ब्राह्मण षष्ठं

---

१ N समूह्यागमा उत्पद्यन्ते; our reading is based on T.

लोकायतम् । पुनरपि महामते मामेवमाह ब्राह्मणो लोकायतिकः—सर्वं भो गौतम
एकत्वं सर्वमन्यत्वं सर्वमुभयत्वं सर्वमनुभयत्वं सर्वं कारणाधीनं विचित्रहेतूपपत्ति-
दर्शनात् । इदमपि ब्राह्मण एकादशं लोकायतम् । पुनरपि भो गौतम सर्वमव्या-
N 177 कृतं सर्वं व्याकृतम्, अस्त्यात्मा नास्त्यात्मा, अस्त्ययं लोको नास्त्ययं लोकः, अस्ति परो
लोको नास्ति परो लोकः, नास्त्यस्ति च परो लोकः, अस्ति मोक्षो नास्ति मोक्षः, सर्वं
क्षणिकं सर्वमक्षणिकम्, आकाशमप्रतिसंख्यानिरोधो निर्वाणं भो गौतम कृतकमकृतकम्,
अस्त्यन्तराभवो नास्त्यन्तराभव इति । तस्यैतदुक्तं महामते मया—यदि भो ब्राह्मण एवम् , इद-
मपि ब्राह्मण लोकायतमेव भवतीति, न मदीयम् । त्वदीयमेतद्ब्राह्मण लोकायतम् । अहं भो
ब्राह्मण अनादिकालप्रपञ्चविकल्पवासनादौष्ठुल्यहेतुकं त्रिभवं वर्णयामि । स्वचित्तदृश्यमात्रा-
नवबोधाद्ब्राह्मण विकल्पः प्रवर्तते न बाह्यभावोपलम्भात् । यथा तीर्थकराणामात्मेन्द्रियार्थ-
संनिकर्षात्त्रयाणां न तथा मम । अहं भो ब्राह्मण न हेतुवादी नाहेतुवादी अन्यत्र विकल्प-
मेव ग्राह्यग्राहकभावेन प्रज्ञाप्य प्रतीत्यसमुत्पादं देशयामि । न च त्वादृशा अन्ये वा
बुध्यन्ते आत्मग्राहपतितया संतत्या । निर्वाणाकाशनिरोधानां महामते तत्त्वमेव नोपलभ्यते
संख्यायाम्, कुतः पुनः कृतकत्वम् ॥

पुनरपि महामते लोकायतिको ब्राह्मण एवमाह—अज्ञानतृष्णाकर्महेतुकमिदं भो
N 178 गौतम त्रिभवम्, अथाहेतुकम् ? द्वयमप्येतद्ब्राह्मण लोकायतम् । स्वसामान्यलक्षणपतिता भो
गौतम सर्वभावाः । इदमपि ब्राह्मण लोकायतमेव भवति । यावद्ब्राह्मण मनोविस्पन्दितं
बाह्यार्थाभिनिवेशविकल्पस्य तावल्लोकायतम् ॥

पुनरपरं महामते लोकायतिको ब्राह्मणो मामेतदवोचत्—अस्ति भो गौतम किंचिद्यन्न
लोकायतम् ? मदीयमेव भो गौतम सर्वतीर्थकरैः प्रसिद्धं विचित्रैः पदव्यञ्जनैर्हेतुदृष्टान्तोप-
संहारैर्देश्यते । अस्ति भो ब्राह्मण यन्न त्वदीयं न च न प्रसिद्धं देश्यते न च न विचित्रैः
पदव्यञ्जनैर्न च नार्थोपसंहितमेव । किं तदलोकायतं यन्न प्रसिद्धं देश्यते च ? अस्ति च भो
ब्राह्मण अलोकायतं यत्र सर्वतीर्थकराणां तत्र च बुद्धिर्न गाहते बाह्यभावादसद्भूतविकल्पप्रपञ्चा-
भिनिविष्टानाम् । यदुत विकल्पस्याप्रवृत्तिः सदसतः स्वचित्तदृश्यमात्रावबोधाद्विकल्पो न
प्रवर्तते । बाह्यविषयग्रहणाभावाद्विकल्पः स्वस्थानेऽवतिष्ठते दृश्यते । तेनेदमलोकायतं मदीयं
न च त्वदीयम् । स्वस्थानेऽवतिष्ठत इति न प्रवर्तत इत्यर्थः । अनुत्पत्तिविकल्पस्याप्रवृत्ति-
N 179 रित्युच्यते । एवमिदं भो ब्राह्मण यन्न लोकायतम् । संक्षेपतो ब्राह्मण यत्र विज्ञानस्यागतिर्गति-
श्च्युतिरुपपत्तिः प्रार्थनाभिनिवेशाभिष्वङ्गो दर्शनं दृष्टिः स्थानं परामृष्टिर्विचित्रलक्षणाभि-
निवेशः संगतिः सत्त्वानां तृष्णायाः कारणाभिनिवेशश्च । एतद्धो ब्राह्मण त्वदीयं लोकायतं
न मदीयम् । एवमहं महामते पृष्टो लोकायतिकेन ब्राह्मणेनागत्य । स च मयैवं विसर्जित-
स्तूष्णीभावेन प्रक्रान्तः ॥

अथ खलु कृष्णपक्षिको नागराजो ब्राह्मणरूपेणागत्य भगवन्तमेतदवोचत्–तेन हि गौतम परलोक एव न संविद्यते । तेन हि माणव कुतस्त्वमागतः ? इहाहं गौतम श्वेतद्वीपादागतः । स एव ब्राह्मण परो लोकः । अथ माणवो निष्प्रतिभानो निगृहीतोऽन्तर्हितोऽपृष्ट्वैव मां स्वनयप्रत्यवस्थानकथां चिन्तयन् शाक्यपुत्रो मन्नयबहिर्धा वराकोऽप्रवृत्तिलक्षणहेतुवादी स्वविकल्पदृश्यलक्षणाववोधाद्विकल्पस्याप्रवृत्तिं वर्णयति । त्वं चैतर्हि महामते मां पृच्छसि–किं कारणं लोकायतिकविचित्रमन्त्रप्रतिभानं सेव्यमानस्यामिषसंग्रहो भवति न धर्मसंग्रह इति । महामतिराह–अथ धर्मामिषमिति भगवन् कः पदार्थः ? भगवानाह– N 180
साधु साधु महामते । पदार्थद्वयं प्रति मीमांसा प्रवृत्ता अनागतां जनतां समालोक्य । तेन हि महामते शृणु, साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् ॥

भगवांस्तस्यैतदवोचत्–तत्र आमिषं महामते कतमत् ? यदुत आमिषमामृशमाकर्षणं निर्मृषं परामृष्टिः स्वादो बाह्यविषयाभिनिवेशोऽन्तद्वयप्रवेशः । कुदृष्ट्या पुनः स्कन्धप्रादुर्भावो जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासप्रवृत्तिस्तृष्णायाः पौनर्भविक्या आदिं कृत्वा । आमिषमिदमित्युच्यते मया च अन्यैश्च बुद्धैर्भगवद्भिः । एष महामते आमिषसंग्रहो न धर्मसंग्रहो यं लोकायतिकं सेवमानो लभते लोकायतम् ॥

तत्र महामते धर्मसंग्रहः कतमः ? यदुत स्वचित्तधर्मनैरात्म्यद्वयाववोधाद्धर्मपुद्गलनैरात्म्यलक्षणदर्शनाद्विकल्पस्याप्रवृत्तिः, भूम्युत्तरोत्तरपरिज्ञानाच्चित्तमनोमनोविज्ञानव्यावृत्तिः, सर्वबुद्धज्ञानाभिषेकगतिः अनधिष्ठापदपरिग्रहः सर्वधर्मानाभोगवशवर्तिता धर्म इत्युच्यते, N 181
सर्वदृष्टिप्रपञ्चविकल्पभावान्तद्वयापतनतया । प्रायेण हि महामते तीर्थकरवादो बालानन्तद्वये पातयति न तु विदुषाम्, यदुत उच्छेदे च शाश्वते च । अहेतुवादपरिग्रहाच्छाश्वतदृष्टिर्भवति, कारणविनाशहेत्वभावादुच्छेददृष्टिर्भवति । किं तु उत्पादस्थितिभङ्गदर्शनाद्धर्म इत्येवं वदामि । एष महामते धर्मामिषनिर्णयः, यत्र त्वया अन्यैश्च बोधिसत्त्वैर्महासत्त्वैः शिक्षितव्यम् ॥

तत्रेदमुच्यते–

संग्रहैश्च दमेत्सत्त्वान् शीलेन च वशीकरेत् ।
प्रज्ञया नाशयेद्दृष्टिं विमोक्षैश्च विवर्धयेत् ॥ ६२ ॥
लोकायतमिदं सर्वं यत्तीर्थ्यैर्देश्यते मृषा ।
कार्यकारणसद्दृष्ट्या स्वसिद्धान्तो न विद्यते ॥ ६३ ॥
अहमेकः स्वसिद्धान्तं कार्यकारणवर्जितम् ।
देशेमि शिष्यवर्गस्य लोकायतविवर्जितम् ॥ ६४ ॥
चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं हि दृश्यते ।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम् ॥ ६५ ॥

१ N एकस्व° for एकः स्व°.

N 182 यावत्प्रवर्तते चित्तं तावल्लोकायतं भवेत् ।
अप्रवृत्तिर्विकल्पस्य स्वचित्तं पश्यते जगत् ॥ ६६ ॥
आयं कार्यार्थनिर्वृत्तिं व्ययं कार्यस्य दर्शनम् ।
आयव्ययपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ६७ ॥
नित्यमनित्यं कृतकमकृतकं परापरम् ।
एवमाद्यानि सर्वाणि लोकायतनयं भवेत् ॥ ६८ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—निर्वाणं
निर्वाणमिति भगवन्नुच्यते । कस्यैतदधिवचनं यदुत निर्वाणमिति यत्सर्वतीर्थकरैर्विकल्प्यते ?
भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । यथा
तीर्थकरा निर्वाणं विकल्पयन्ति, न च भवति तेषां विकल्पानुरूपं निर्वाणम् । साधु भगव-
न्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्—तत्र
केचित्तावन्महामते तीर्थकराः स्कन्धधात्वायतननिरोधाद्विषयवैराग्यान्नित्य[1]वैधर्म्यादर्शनाच्चित्त-
N 183 चैत्तकलापो न प्रवर्तते । अतीतानागतप्रत्युत्पन्नविषयाननुस्मरणाद्दीपबीजानलवदुपादानोप-
रमादप्रवृत्तिर्विकल्पस्येति वर्णयन्ति । अतस्तेषां तत्र निर्वाणबुद्धिर्भवति । न च महामते
विनाशदृष्ट्या निर्वायते ॥

अन्ये पुनर्देशान्तरस्थानगमनं मोक्ष इति वर्णयन्ति विषयविकल्पोपरमादिषु पवनवत् ।
अन्ये पुनर्वर्णयन्ति तीर्थकराः बुद्धिबोद्धव्यदर्शनविनाशान्मोक्ष इति । अन्ये विकल्पस्या-
प्रवृत्तेर्नित्यानित्यदर्शनान्मोक्षं कल्पयन्ति । अन्ये पुनर्वर्णयन्ति विविधनिमित्तविकल्पो
दुःखजन्मवाहक इति स्वचित्तदृश्यमात्राकुशलाः । निमित्तभयभीता निमित्तदर्शनात्सुखा-
भिलाषनिमित्ते[2] निर्वाणबुद्धयो भवन्ति । अन्ये पुनरध्यात्मबाह्यानां सर्वधर्माणां स्वसामान्य-
लक्षणावबोधादविनाशतोऽतीतानागतप्रत्युत्पन्नभावास्तितया निर्वाणं कल्पयन्ति । अन्ये
पुनरात्मसत्त्वजीवपोषपुरुषपुद्गलसर्वधर्माविनाशतश्च निर्वाणं कल्पयति । अन्ये पुनर्महामते
तीर्थकरा दुर्विदग्धबुद्धयः प्रकृतिपुरुषान्तरदर्शनाद्गुणपरिणामकर्तृत्वाच्च निर्वाणं कल्पयन्ति ।
N 184 अन्ये पुण्यापुण्यपरिक्षयात् । अन्ये क्लेशक्षयाज्ज्ञानेन च । अन्ये ईश्वरस्वतन्त्रकर्तृत्वदर्शनाज्जगतो
निर्वाणं कल्पयन्ति । अन्ये अन्योन्यप्रवृत्तोऽयं संभवो जगत इति न कारणतः । स च
कारणाभिनिवेश एव, न चावबुध्यन्ते मोहात्, तदनवबोधान्निर्वाणं कल्पयन्ति । अन्ये
पुनर्महामते तीर्थकराः सत्यमार्गाधिगमान्निर्वाणं कल्पयन्ति । अन्ये गुणगुणिनोरभिसंबद्धा-
देकत्वान्यत्वोभयत्वानुभयत्वदर्शनान्निर्वाणबुद्धयो भवन्ति । अन्ये स्वभावतः प्रवृत्तितो मयूर-
वैचित्र्यविविधरत्नाकरकण्टकतैक्ष्ण्यवद्भावानां स्वभावं दृष्ट्वा निर्वाणं विकल्पयन्ति । अन्ये
पुनर्महामते पञ्चविंशतितत्त्वावबोधात्, अन्ये प्रजापालेन षाड्गुण्योपदेशग्रहणान्निर्वाणं[3]

---

१ N नित्यवैधर्मा° for नित्यवैधर्म्या°. २ N °निमित्तो for °निमित्ते. ३ N षड्गुणो° for षाड्गुण्यो°.

कल्पयन्ति । अन्ये कालकर्तृदर्शनात्कालायत्ता लोकप्रवृत्तिरिति तदवबोधान्निर्वाणं कल्पयन्ति । अन्ये पुनर्महामते भवेन, अन्येऽभवेन, अन्ये भवाभवपरिज्ञया, अन्ये भवनिर्वाणाविशेषदर्शनेन निर्वाणं कल्पयन्ति । अन्ये पुनर्महामते वर्णयन्ति सर्वज्ञसिंहनादनादिनो यथा स्वचित्तदृश्यमात्रावबोधाद्बाह्यभावाभावानभिनिवेशाच्चातुष्कोटिकरहिताद्[1] यथाभूतावस्थान- N 185
दर्शनात्स्वचित्तदृश्यविकल्पस्यान्तद्वयापतनतया ग्राह्यग्राहकानुपलब्धेः सर्वप्रमाणाग्रहणाप्रवृत्तिदर्शनात्तत्त्वस्य व्यामोहकत्वादग्रहणं तत्त्वस्य, तद्व्युदासात्स्वप्रत्यात्मार्यधर्माधिगमान्नैरात्म्यद्वयावबोधात्क्लेशद्वयविनिवृत्तेरावरणद्वयविशुद्धत्वाद्भूम्युत्तरोत्तरतथागतभूमिमायादिविश्वसमाधिचित्तमनोमनोविज्ञानव्यावृत्तेर्निर्वाणं कल्पयन्ति । एवमन्यान्यपि यानि तार्किकैः कुतीर्थ्यप्रणीतानि तान्ययुक्तियुक्तानि विद्वद्भिः परिवर्जितानि । सर्वेऽप्येते महामते अन्तद्वयपतितया संतत्या निर्वाणं कल्पयन्ति । एवमादिभिर्विकल्पैर्महामते सर्वतीर्थकरैर्निर्वाणं परिकल्प्यते । न चात्र कश्चित्प्रवर्तते वा निवर्तते वा । एकैकस्य महामते तीर्थकरस्य निर्वाणं तत्स्वशास्त्रमतिबुद्ध्या परीक्ष्यमाणं व्यभिचरति । तथा न तिष्ठते यथा तैर्विकल्प्यते । मनस आगतिगतिविस्पन्दनान्नास्ति कस्यचिन्निर्वाणम् । अत्र त्वया महामते शिक्षित्वा अन्यैश्च बोधिसत्त्वैर्महासत्त्वैः सर्वतीर्थकरनिर्वाणदृष्टिर्व्यावर्तनीया ॥

तत्रेदमुच्यते–

निर्वाणदृष्टयस्तीर्थ्या विकल्पेन्ति पृथक्पृथक् ।
कल्पनामात्रमेवैषां मोक्षोपायो न विद्यते ॥ ६९ ॥ N 186
बन्ध्यबन्धननिर्मुक्ता उपायैश्च विवर्जिताः ।
तीर्थ्या मोक्षं विकल्पेन्ति न च मोक्षो हि विद्यते ॥ ७० ॥
अनेकभेदभिन्नो हि तीर्थ्यानां दृश्यते नयः ।
अतस्तेषां न मोक्षोऽस्ति कस्मान्मूढैर्विकल्प्यते ॥ ७१ ॥
कार्यकारणदुर्दृष्ट्या तीर्थ्याः सर्वे विमोहिताः ।
अतस्तेषां न मोक्षोऽस्ति सदसत्पक्षवादिनाम् ॥ ७२ ॥
जल्पप्रपञ्चाभिरता हि बाला-
स्तत्त्वे न कुर्वन्ति मतिं विशालाम् ।
जल्पो हि त्रैधातुकदुःखयोनि-
स्तत्त्वं हि दुःखस्य विनाशहेतुः ॥ ७३ ॥
यथा हि दर्पणे रूपं दृश्यते न च विद्यते ।
वासनादर्पणे चित्तं द्विधा दृश्यति बालिशैः ॥ ७४ ॥
चित्तदृश्यापरिज्ञानाद्विकल्पो जायते द्विधा ।
चित्तदृश्यपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ७५ ॥

---

१ N °रहित° for °रहिताद्.

चित्तमेव भवेच्चित्रं लक्ष्यलक्षणवर्जितम् ।
दृश्याकारं न दृश्योऽस्ति यथा बालैर्विकल्प्यते ॥ ७६ ॥
विकल्पमात्रं त्रिभवं बाह्यमर्थं न विद्यते ।
विकल्पं दृश्यते चित्रं न च बालैर्विभाव्यते ॥ ७७ ॥
N 187 सूत्रे सूत्रे विकल्पोक्तं संज्ञानामान्तरेण च ।
अभिधानविनिर्मुक्तमभिधेयं न लक्ष्यते ॥ ७८ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्–देशयतु मे
भगवांस्तथागतोऽर्हन् सम्यक्संबुद्धः स्वबुद्धबुद्धताम्, येन अहं च अन्ये च बोधिसत्त्वा
महासत्त्वास्तथागतस्वकुशलाः स्वमात्मानं परांश्चावबोधयेयुः । भगवानाह–तेन हि महामते
त्वमेव परिपृच्छ । यथा ते क्षमते, तथा विसर्जयिष्यामि । महामतिराह–किं पुनर्भगवन्
तथागतोऽर्हन् सम्यक्संबुद्धोऽकृतकः कृतकः कार्यं कारणं लक्ष्यं लक्षणमभिधानमभिधेयं
बुद्धिर्बोद्धव्यः, एवमाद्यैः पदनिरुक्तैः किं भगवानन्योऽनन्यः ?

भगवानाह–न महामते तथागतोऽर्हन् सम्यक्संबुद्ध एवमाद्यैः पदनिरुक्तैरकृतको न
कृतकं न कार्यं न कारणम् । तत्कस्य हेतोः ? यदुत उ[1]भयदोषप्रसङ्गात् । यदि हि महामते
तथागतः कृतकः स्यात्, अनित्यत्वं स्यात् । अनित्यत्वात्सर्वं हि कार्यं तथागतः स्यात् ।
N 188 अनिष्टं चैतन्मम च अन्येषां च तथागतानाम् । अथाकृतकः स्यात्, अलब्धात्मकत्वात्समुदा-
गतसंभारवैयर्थ्यं स्यात्, शशविषाणवद्वन्ध्यापुत्रतुल्यश्च स्यादकृतकत्वात् । यच्च महामते न
कार्यं न कारणं तन्न सन्नासत् । यच्च न सन्नासत्, तच्चातुष्कोटिकबाह्यम् । चातुष्कोटिकं
च महामते लोकव्यवहारः । यच्च चातुष्कोटिकबाह्यं तद्वाग्मात्रं प्रसज्यते वन्ध्यापुत्रवत् ।
वन्ध्यापुत्रो हि महामते वाग्मात्रं न चातुष्कोटिकपतितः । अपतितत्वादप्रमाणं विदुषाम् ।
एवं सर्वतथागतपदार्था विद्वद्भिः प्रत्यवगन्तव्याः । यदप्युक्तं मया निरात्मानः सर्वधर्मा
इति, तस्याप्यर्थं निबोद्धव्यं महामते । निरात्मभावो महामते नैरात्म्यम् । स्वात्मना सर्वधर्मा
विद्यन्ते न परात्मना गोश्ववत् । तद्यथा महामते न गोभावोऽश्वात्मको न चाश्वभावो
गवात्मकः, न सन्नासत्, न च तौ स्वलक्षणतो न, विद्येते एव तौ स्वलक्षणतः, एवमेव
महामते सर्वधर्मा न च स्वलक्षणेन न संविद्यन्ते । विद्यन्त एव । तेन च बालपृथग्जनै-
र्निरात्मार्थता अवबुध्यते विकल्पमुपादाय, न त्वविकल्पम् । एवं शून्यानुत्पादास्वाभाव्यं सर्व-
N 189 धर्माणां प्रत्यवगन्तव्यम् । एवं स्कन्धेभ्यो नान्यो नानन्यस्तथागतः । यद्यनन्यः स्कन्धेभ्यः
स्यात्, अनित्यः स्यात् कृतत्वात्स्कन्धानाम् । अथान्यः स्यात्, द्वये सत्यन्यथा भवति
गोविषाणवत् ॥

तत्र सादृश्यदर्शनादनन्यत्वं ह्रस्वदीर्घदर्शनादन्यत्वं सर्वभावानाम् । दक्षिणं हि
महामते गोविषाणं वामस्यान्यद्भवति, वाममपि दक्षिणस्य । एवं ह्रस्वदीर्घत्वयोः परस्परतः ।

---

१ N प्रभय° for उभय°.

एवं वर्णवैचित्र्यतश्च । अतश्चापरस्परतोऽन्यः । न चान्यस्तथागतः स्कन्धधात्वायतनेभ्यः । एवं विमोक्षात्तथागतो नान्यो नानन्यः । तथागत एव मोक्षशब्देन देश्यते । यदि अन्यः स्यान्मोक्षात्तथागतः, रूपलक्षणयुक्तः स्यात् । रूपलक्षणयुक्तत्वादनित्यः स्यात् । अथानन्यः स्यात्, प्राप्तिलक्षणविभागो न स्याद्योगिनाम् । दृष्टश्च महामते विभागो योगिभिः । अतो नान्यो नानन्यः । एवं ज्ञानं ज्ञेयान्नान्यन्नानन्यत् । यद्धि महामते न नित्यं नानित्यं न कार्यं न कारणं न संस्कृतं नासंस्कृतं न बुद्धिर्न बोद्धव्यं न लक्ष्यं न लक्षणं न स्कन्धा न स्कन्धेभ्योऽन्यत् नाभिधेयं नाभिधानं नैकत्वान्यत्वोभयत्वानुभयत्वसंबद्धम्, तत्सर्वप्रमाणविनिवृत्तम् । यत्सर्वप्रमाणविनिवृत्तं तद्वाङ्मात्रं संपद्यते । यद्वाङ्मात्रं तदनुत्पन्नम् । यदनुत्पन्नं तद- N 190
निरुद्धम् । यदनिरुद्धं तदाकाशसमम् । आकाशं च महामते न कार्यं न कारणम् । यच्च न कार्यं न कारणं तन्निरालम्ब्यम् । यन्निरालम्ब्यं तत्सर्वप्रपञ्चातीतम् । यत्सर्वप्रपञ्चातीतं स तथागतः । एतद्धि महामते सम्यक्संबुद्धत्वम् । एषा सा बुद्धबुद्धता सर्वप्रमाणेन्द्रियविनिवृत्ता ॥

तत्रेदमुच्यते—

प्रमाणेन्द्रियनिर्मुक्तं न कार्यं नापि कारणम् ।
बुद्धिबोद्धव्यरहितं लक्ष्यलक्षणवर्जितम् ॥ ७९ ॥
[1]स्कन्धान् प्रतीत्य संबुद्धो न दृष्टः केनचित्क्वचित् ।
यो न दृष्टः क्वचित्केनचित्कथं तस्य विभावना ॥ ८० ॥
न कृतको नाकृतको न कार्यं नापि कारणम् ।
न च स्कन्धा न चास्कन्धा न चाप्यन्यत्र संकरात् ॥ ८१ ॥
न हि यो येन भावेन कल्प्यमानो न दृश्यते ।
न तं नास्त्येव गन्तव्यं धर्माणामेव धर्मता ॥ ८२ ॥
अस्तित्वपूर्वकं नास्ति अस्ति नास्तित्वपूर्वकम् ।
अतो नास्ति न गन्तव्यमस्तित्वं न च कल्पयेत् ॥ ८३ ॥
आत्मनैरात्म्यसंमूढाद्घोषमात्रावलम्बिनः ।
अन्तद्वयनिमग्नास्ते नष्टा नाशेन्ति बालिशान् ॥ ८४ ॥
सर्वदोषविनिर्मुक्तं यदा पश्यन्ति मन्नयम् । N 191
तदा सम्यक्प्रपश्यन्ति न ते दूषेन्ति नायकान् ॥ ८५ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—देशयतु मे भगवान्, देशयतु सुगतः, यद्देशनापाठे भगवता अनिरोधानुत्पादग्रहणं कृतम् । उक्तं च त्वया यथा तथागतस्यैतदधिवचनमनिरोधानुत्पाद इति । तत्किमयं भगवन् अभावोऽनिरोधानुत्पादः, उत तथागतस्यैतत्पर्यायान्तरम्? यद्भगवानेवमाह—अनिरुद्धा अनुत्पन्नाश्च भगवता

१ N स्कन्धप्रतीत्यसंबुद्धो for स्कन्धान् प्रतीत्य संबुद्धो.

सर्वधर्मा देश्यन्ते सदसत्पक्षादर्शनात् । यद्यनुत्पन्नाः सर्वधर्मा इति भगवन् धर्मग्रहणं न प्राप्नोति, अजातत्वात्सर्वधर्माणाम् । अथ पर्यायान्तरमेतत्कस्यचिद्धर्मस्य, तदुच्यतां भगवन् । भगवानाह–तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्–न हि महामते अभावस्तथागतो न च सर्वधर्माणामनिरोधानुत्पादग्रहणम् । न प्रत्ययोऽपेक्षि-
N 192 तव्यो न च निरर्थकमनुत्पादग्रहणं क्रियते मया । किं तु महामते मनोमयधर्मकायस्य तथागतस्यैतदधिवचनं यत्र सर्वतीर्थकरश्रावकप्रत्येकबुद्धसप्तभूमिप्रतिष्ठितानां च बोधिसत्त्वानामविषयः । सोऽनुत्पादस्तथागतस्य । एतन्महामते पर्यायवचनम् । तद्यथा महामते इन्द्रः शक्रः पुरंदरः, हस्तः करः पाणिः, तनुर्देहं शरीरम्, पृथिवी भूमिर्वसुंधरा, खमाकाशं गगनम् । इत्येवमाद्यानां भावानामेकैकस्य भावस्य बहवः पर्यायवाचकाः शब्दा भवन्ति विकल्पिताः । न चैषां नामबहुत्वाद्भावबहुत्वं विकल्प्यते । न च स्वभावो न भवति । एवं महामते अहमपि सहायां लोकधातौ त्रिभिर्नामासंख्येयशतसहस्रैर्बालानां श्रवणावभासमागच्छामि । तैश्चाभिलपन्ति माम्, न च प्रजानन्ति तथागतस्यैते नामपर्याया इति । तत्र केचिन्महामते तथागतमिति मां संप्रजानन्ति । केचित्स्वयंभुवमिति । नायकं विनायकं परिणायकं बुद्धमृषिं वृषभं ब्रह्माणं विष्णुमीश्वरं प्रधानं कपिलं भूतान्तमरिष्टनेमिनं सोमं भास्करं रामं व्यासं शुकमिन्द्रं बलिं
N 193 वरुणमिति चैके संजानन्ति । अपरे अनिरोधानुत्पादं शून्यतां तथतां सत्यतां भूततां भूतकोटिं धर्मधातुं निर्वाणं नित्यं समतामद्वयमनिरोधमनिमित्तं प्रत्ययं बुद्धहेतूपदेशं विमोक्षं मार्गसत्यानि सर्वज्ञं जिनं मनोमयमिति चैके संजानन्ति । एवमादिभिर्महामते परिपूर्णं त्रिभिर्नामासंख्येयशतसहस्रैरनूनैरनधिकैरिहान्येषु च लोकधातुषु मां जनाः संजानन्ते उदकचन्द्र इवाप्रविष्टनिर्गतम् । न च बाला अवबुध्यन्ते द्वयान्तपतितया संतत्या[1] । अथ च सत्कुर्वन्ति गुरुकुर्वन्ति मानयन्ति पूजयन्ति च मां पदार्थनिरुक्त्यकुशला अभिन्नसंज्ञाः, न स्वनयं प्रजानन्तिं देशनारुतपाठाभिनिविष्टाः । अनिरोधानुत्पादमभावं कल्पयिष्यन्ति न च तथागतनामपदपर्यायान्तरमिन्द्रशक्रपुरंदरं न स्वनयप्रत्यवस्थानपाठमधिमोक्षन्ति, यथारुतार्थपाठानुसारित्वात्सर्वधर्माणाम् । एवं च महामते वक्ष्यन्ति ते मोहपुरुषाः–यथारुत एवार्थः, अनन्योऽर्थो रुतादिति । तत्कस्य हेतोः? यदुत अर्थस्याशरीरत्वाद्रुतादन्योऽर्थो न भवति । किं तु रुतमेवार्थ
N 194 इति रुतस्वभावापरिज्ञानादविदग्धबुद्धयः । न त्वेवं ज्ञास्यन्ति महामते यथा रुतमुत्पन्नप्रध्वंसि, अर्थोऽनुत्पन्नप्रध्वंसी । रुतं महामते अक्षरपतितम्, अर्थोऽनक्षरपतितः । भावाभावविवर्जितत्वादजन्माशरीरम् । न च महामते तथागता अक्षरपतितं धर्मं देशयन्ति । अक्षराणां सदसतोऽनुपलब्धेः । अन्यत्र अक्षरपतिताशयः पुनर्महामते योऽक्षरपतितं धर्मं देशयति, स च प्रलपति, निरक्षरत्वाद्धर्मस्य । अत एतस्मात्कारणान्महामते उक्तं देशनापाठे मया अन्यैश्च बुद्धबोधिसत्त्वैः यथैकमप्यक्षरं तथागता नोदाहरन्ति न प्रत्याहरन्तीति । तत्कस्य

---

[1] N अरिष्टं नेमिनं for अरिष्टनेमिनं.

हेतोः? यदुत अनक्षरत्वाद्धर्माणाम् । न च नार्थोपसंहितमुदाहरन्ति । उदाहरन्त्येव विकल्पमुपादाय । अनुपादानान्महामते सर्वधर्माणां शासनलोपः स्यात् । शासनानां लोपाच्च बुद्धप्रत्येकबुद्धश्रावकबोधिसत्त्वानामभावः स्यात् । तदभावात्किं कस्य देश्येत? अत एतस्मात्कारणान्महामते बोधिसत्त्वेन महासत्त्वेन देशनापाठरुतानभिनिविष्टेन भवितव्यम् । स व्यभिचारी महामते देशनापाठः । सत्त्वाशयप्रवृत्तत्वान्नानाधिमुक्तिकानां सत्त्वानां धर्मदेशना क्रियते चित्तमनोमनोविज्ञानव्यावृत्त्यर्थं मया अन्यैश्च तथागतैरर्हद्भिः सम्यक्संबुद्धैः, न स्वप्रत्यात्मार्यज्ञानाधिगमप्रत्यवस्थानात् सर्वधर्मनिराभासस्वचित्तदृश्यमात्रावबोधाद्द्विधाविकल्पस्य व्यावृत्तितः । अर्थप्रतिशरणेन महामते बोधिसत्त्वेन महासत्त्वेन भवितव्यं न व्यञ्जनप्रतिशरणेन । N 195
व्यञ्जनानुसारी महामते कुलपुत्रो वा कुलदुहिता वा स्वात्मानं च नाशयति, परार्थांश्च नावबोधयति । कुदृष्टिपतितया संतत्या स्वपक्षं विभ्राम्यते कुतीर्थकैः सर्वधर्मभूमिस्वलक्षणाकुशलैः पदनिरुक्त्यनभिज्ञैः ॥

अथ सर्वधर्मभूमिस्वलक्षणकुशला भवन्ति पदपर्यायनिरुक्तिगतिंगता भावार्थयुक्तिकुशलाः । ततः स्वात्मानं च सम्यगनिमित्तसुखेन प्रीणयन्ति, परांश्च सम्यङ्महायाने प्रतिष्ठापयन्ति । महायाने च महामते सम्यक्परिगृह्यमाणे बुद्धश्रावकप्रत्येकबुद्धबोधिसत्त्वानां परिग्रहः कृतो भवति । बुद्धबोधिसत्त्वश्रावकप्रत्येकबुद्धपरिग्रहात्सर्वसत्त्वपरिग्रहः कृतो भवति । सर्वसत्त्वपरिग्रहात्सद्धर्मपरिग्रहः कृतो भवति । सद्धर्मपरिग्रहाच्च महामते बुद्धवंशस्यानुपच्छेदः कृतो भवति । बुद्धवंशस्यानुपच्छेदादायतनविशेषप्रतिलम्भाः प्रज्ञायन्ते । अतस्तेषु विशिष्टायतनप्रतिलम्भेषु बोधिसत्त्वा महासत्त्वा उपपत्तिं परिगृह्य महायाने प्रतिष्ठापनतया N 196
दशवशिताविचित्ररूपवेशधारिणो भूत्वा सत्त्वविशेषानुशयलक्षणगतिभूतास्तथात्वाय धर्मं देशयन्ति ॥

तत्र तथात्वमनन्यथात्वं तत्त्वम् । अनायूहानिर्यूहलक्षणं सर्वप्रपञ्चोपशमं तत्त्वमित्युच्यते । तेन न महामते कुलपुत्रेण वा कुलदुहित्रा वा यथारुतार्थाभिनिवेशकुशलेन भवितव्यम् । निरक्षरत्वात्तत्त्वस्य । न चाङ्गुलिप्रेक्षकेण भवितव्यम् । तद्यथा महामते अङ्गुल्या कश्चित्कस्यचित्किंचिदादर्शयेत् । स चाङ्गुल्यग्रमेव प्रतिसरेद्वीक्षितुम् । एवमेव महामते बालजातीया इव बालपृथग्जनवर्गा यथारुताङ्गुल्यग्राभिनिवेशाभिनिविष्टा एव[1] कालं करिष्यन्ति, न यथारुताङ्गुल्यग्रार्थं हित्वा परमार्थमागमिष्यन्ति । तद्यथा महामते अन्नं भोज्यं बालानां च कश्चिदनभिसंस्कृतं परिभोक्तुम् । अथ कश्चिदनभिसंस्कृतं परिभुञ्जीत, स उन्मत्त इति विकल्प्येत अनुपूर्वसंस्कारानवबोधादन्नस्य, एवमेव महामते अनुत्पादोऽनिरोधो नानभिसंस्कृतः शोभते । अवश्यमेवात्राभिसंस्कारेण भवितव्यम्, न चात्मानमङ्गुल्यग्रग्रहणार्थदर्शनवत् । अत एतेन कारणेन महामते अर्थाभियोगः करणीयः । अर्थो महामते N 197
विविक्तो निर्वाणहेतुः । रुतं विकल्पसंबद्धं संसारावाहकम् । अर्थश्च महामते बहुश्रुतानां

१ N एवं for एव.

सकाशाल्लभ्यते। बाहुश्रुत्यं च नाम महामते यदुत अर्थकौशल्यं न रुतकौशल्यम्। तत्रार्थकौशल्यं यत्सर्वतीर्थकरवादासंसृष्टं दर्शनम्। यथा स्वयं च न पतति परांश्च न पातयति। एवं सत्यर्थे महामते बाहुश्रुत्यं भवति। तस्मादर्थकामेन ते सेवनीयाः। अतो विपरीता ये यथारुतार्थाभिनिविष्टास्ते वर्जनीयास्तत्त्वान्वेषिणा॥

पुनरपरं महामतिर्बुद्धाधिष्ठानाधिष्ठित एवमाह—न भगवता अनिरोधानुत्पाददर्शनेन किंचिद्विशिष्यते। तत्कस्य हेतोः? सर्वतीर्थकराणामपि भगवन् कारणान्यनुत्पन्नान्यनिरुद्धानि। तवापि भगवन् आकाशमप्रतिसंख्यानिरोधो निर्वाणधातुश्चानिरोधोऽनुत्पन्नः। तीर्थकरा अपि भगवन् कारणप्रत्ययहेतुकीं जगत उत्पत्तिं वर्णयन्ति। भगवानपि अज्ञानतृष्णाकर्मविकल्पप्रत्ययेभ्यो जगत उत्पत्तिं वर्णयति। तस्यैव कारणस्य संज्ञान्तरविशेषमुत्पाद्य प्रत्यया इति। एवं बाह्यैः प्रत्ययैर्बाह्यानाम्। ते च त्वं च भावानामुत्पत्तये। अतो निर्वि-
N 198 शिष्टोऽयं भगवन् वादस्तीर्थकरवादेन भवति। अणुप्रधानेश्वरप्रजापतिप्रभृतयो नवद्रव्यसहिता अनिरुद्धा अनुत्पन्नाः। तवापि भगवन् सर्वभावा अनुत्पन्नानिरुद्धाः सदसतोऽनुपलब्धेः। भूताविनाशाच्च स्वलक्षणं नोत्पद्यते, न निरुध्यते। यां तां गतिं गत्वा भूतो भूतस्वभावं न विजहाति। भूतविकल्पविकारोऽयं भगवन् सर्वतीर्थकरैर्विकल्प्यते त्वया च। अत एतेन कारणेन अविशिष्टोऽयं वादः। विशेषो वात्र वक्तव्यो येन तथागतवादो विशेष्यते, न सर्वतीर्थकरवादः। अविशिष्यमाणे भगवन् स्ववादे तीर्थकराणामपि बुद्धप्रसङ्गः स्यादनिरोधानुत्पादहेतुत्वात्। अस्थानमनवकाशं चोक्तं भगवता यदेकत्र लोकधातौ बहवस्तथागता उत्पद्येरन्निति। प्राप्तं चैतत्तथागतबहुत्वं सदसत्कार्यपरिग्रहाच्चाविशिष्यमाणे स्ववादे॥

भगवानाह—न मम महामते अनिरोधानुत्पादस्तीर्थकरानुत्पादानिरोधवादेन तुल्यो नाप्युत्पादानित्यवादेन। तत्कस्य हेतोः? तीर्थकराणां हि महामते भावस्वभावो विद्यत एवानुत्पन्नाविकारलक्षणप्राप्तः। न त्वेवं मम सदसत्पक्षपतितः। मम तु महामते सदसत्पक्षविगत उत्पादभङ्गविरहितो न भावो नाभावः, मायास्वरूपवैचित्र्यदर्शनवन्नाभावः। कथं न भावः?
N 199 यदुत रूपस्वभावलक्षणग्रहणाभावाद्दृश्यादृश्यतो ग्रहणाग्रहणतः। अत एतस्मात्कारणात्सर्वभावा न भावा नाभावाः। किं तु स्वचित्तदृश्यमात्रावबोधाद्विकल्पस्याप्रवृत्तेः स्वस्थो लोको निष्क्रियः। बालाः क्रियावन्तं कल्पयन्ति, न त्वार्याः। अभूतार्थविकल्पार्थविभ्रम् एष महामते गन्धर्वनगरमायापुरुषवत्। तद्यथा महामते कश्चिद्गन्धर्वनगरे बालजातीयो मायापुरुषसत्त्वसार्थवैचित्र्यं प्रविशन्तं वा निर्गच्छन्तं वा कल्पयेत्—अमी प्रविष्टा अमी निर्गताः। न च तत्र कश्चित्प्रविष्टो वा निर्गतो वा। अथ यावदेव विकल्पविभ्रमभाव एषः, तेषामेवमेव महामते उत्पादानुत्पादविभ्रम एष बालानाम्। न चात्र कश्चित्संस्कृतोऽसंस्कृतो वा मायापुरुषोत्पत्तिवत्। न च मायापुरुष उत्पद्यते वा निरुध्यते वा भावाभावाकिंचित्करत्वात्। एवमेव सर्वधर्मा भङ्गोत्पादवर्जिताः। अन्यत्र वितथपतितया संज्ञया बाला उत्पादनिरोधं कल्पयन्ति न त्वार्याः। तत्र वितथमिति महामते न तथा यथा भावस्वभावः कल्प्यते।

नाप्यन्यथा । अन्यथा कल्प्यमाने सर्वभावस्वभावाभिनिवेश एव स्यात् । न विविक्तदर्शना- N 200
विविक्तदर्शनाद्विकल्पस्य व्यावृत्तिरेव न स्यात् । अत एतस्मात्कारणान्महामते अनिमित्तदर्शनमेव श्रेयो न निमित्तदर्शनम् । निमित्तं पुनर्जन्महेतुत्वादश्रेयः । अनिमित्तमिति महामते विकल्पस्याप्रवृत्तिरनुत्पादो निर्वाणमिति वदामि । तत्र निर्वाणमिति महामते यथाभूतार्थस्थानदर्शनं विकल्पचित्तचैत्तकलापस्य परावृत्तिपूर्वकम् । तथागतस्वप्रत्यात्मार्यज्ञानाधिगमं निर्वाणमिति वदामि ॥

तत्रेदमुच्यते--

उत्पादविनिवृत्त्यर्थमनुत्पादप्रसाधकम् ।
अहेतुवादं देशेमि न च बालैर्विभाव्यते ॥ ८६ ॥
अनुत्पन्नमिदं सर्वं न च भावा न सन्ति च ।
गन्धर्वस्वप्नमायाख्या भावा विद्यन्त्यहेतुकाः ॥ ८७ ॥
अनुत्पन्नस्वभावाश्च शून्याः केन वदाहि मे ।
समवायाद्विनिर्मुक्तो बुद्ध्या भावो न गृह्यते ।
तस्माच्छून्यमनुत्पन्नं निःस्वभावं वदाम्यहम् ॥ ८८ ॥
समवायस्तथैकैकं दृश्याभावान्न विद्यते ।
न तीर्थ्यदृष्टयप्रलयात्समवायो न विद्यते ॥ ८९ ॥
स्वप्नं केशोण्डुकं माया गन्धर्वं मृगतृष्णिका ।
अहेतुकानि दृश्यन्ते तथा लोकविचित्रता ॥ ९० ॥ N 201
निगृह्याहेतुवादेन अनुत्पादं प्रसाधयेत् ।
अनुत्पादे प्रसाध्यन्ते मम नेत्री न नश्यति ।
अहेतुवादे देश्यन्ते तीर्थ्यानां जायते भयम् ॥ ९१ ॥
कथं केन कुतः कुत्र संभवोऽहेतुको भवेत् ।
नाहेतुको न हेतुभ्यो यदा पश्यन्ति संस्कृतम् ।
तदा व्यावर्तते दृष्टिर्विभङ्गोत्पादवादिनी ॥ ९२ ॥
किमभावो ह्यनुत्पाद उत प्रत्ययवीक्षणम् ।
अथ भावस्य नामेदं निरर्थं वा ब्रवीहि मे ॥ ९३ ॥
न चाभावो ह्यनुत्पादो न च प्रत्ययवीक्षणम् ।
न च भावस्य नामेदं न च नाम निरर्थकम् ॥ ९४ ॥
यत्र श्रावकप्रत्येकबुद्धानां तीर्थ्यानां च अगोचरः ।
सप्तभूमिगतानां च तदनुत्पादलक्षणम् ॥ ९५ ॥
हेतुप्रत्ययव्यावृत्तिं कारणस्य निरोधनम् ।
चित्तमात्रव्यवस्थानमनुत्पादं वदाम्यहम् ॥ ९६ ॥

N 202 अहेतुवृत्तिर्भावानां कल्प्यकल्पनवर्जितम्।
सदसत्पक्षनिर्मुक्तमनुत्पादं वदाम्यहम्॥ ९७॥

चित्तं दृश्यविनिर्मुक्तं स्वभावद्वयवर्जितम्।
आश्रयस्य परावृत्तिमनुत्पादं वदाम्यहम्॥ ९८॥

न बाह्यभावं नाभावं नापि चित्तपरिग्रहः।
स्वप्नं केशोण्डुकं माया गन्धर्वं मृगतृष्णिका।
सर्वदृष्टिप्रहाणं च तदनुत्पादलक्षणम्॥ ९९॥

एवं शून्यास्वभावाद्यान् पदान् सर्वान् विभावयेत्।
न जातु शून्यया शून्या किं त्वनुत्पादशून्यया॥ १००॥

कलापः प्रत्ययानां च प्रवर्तते निवर्तते।
कलापाच्च पृथग्भूतं न जातं न निरुध्यते॥ १०१॥

भावो न विद्यतेऽन्योऽन्यः कलापाच्च पृथक् क्वचित्।
एकत्वेन पृथक्त्वेन यथा तीर्थ्यैर्विकल्प्यते॥ १०२॥

असन्न जायते भावो नासन्न सदसत्क्वचित्।
अन्यत्र हि कलापोऽयं प्रवर्तते निवर्तते॥ १०३॥

संकेतमात्रमेवेदमन्योन्यापेक्षसंकला।
N 203 अन्यमर्थं न चैवास्ति पृथक्प्रत्ययसंकलात्॥ १०४॥

जन्याभावादनुत्पादं तीर्थ्यदोषविवर्जितम्।
देशेमि संकलामात्रं न च बालैर्विभाव्यते॥ १०५॥

यस्य जन्यो भवेद्भावः संकलायाः पृथक् क्वचित्।
अहेतुवादी विज्ञेयः संकलाया विनाशकः॥ १०६॥

प्रदीपो द्रव्यजातीनां व्यञ्जकः संकला भवेत्।
यस्य भावो भवेत्कश्चित्संकलायाः पृथक् क्वचित्॥ १०७॥

अस्वभावा ह्यनुत्पन्नाः प्रकृत्या गगनोपमाः।
संकलायाः पृथग्भूता ये धर्माः कल्पिताबुधैः॥ १०८॥

अन्यमन्यमनुत्पादमार्याणां प्राप्तिधर्मता।
यस्य जातिमनुत्पादं तदनुत्पादे क्षान्तिः स्यात्॥ १०९॥

यदा सर्वमिमं लोकं संकलामेव पश्यति।
संकलामात्रमेवेदं तदा चित्तं समाध्यते॥ ११०॥

अज्ञानतृष्णाकर्मादिः संकलाध्यात्मिको भवेत्।
खेजमृद्भाण्डचक्रादि बीजभूतादि बाहिरम्॥ १११॥

परतो यस्य वै भावः प्रत्ययैर्जायते क्वचित् ।
न संकलामात्रमेवेदं न ते युक्त्यागमे स्थिताः ॥ ११२ ॥
यदि जन्यो न भावोऽस्ति स्याद्बुद्धिः कस्य प्रत्ययात् । N 204
अन्योन्यजनका ह्येते तेनैते प्रत्ययाः स्मृताः ॥ ११३ ॥
उष्णद्रवचलकठिना धर्मा बालैर्विकल्पिताः ।
कलापोऽयं न धर्मोऽस्ति अतो वै निःस्वभावता ॥ ११४ ॥
वैद्या यथातुरवशात्क्रियाभेदं प्रकुर्वते ।
न तु शास्त्रस्य भेदोऽस्ति दोषभेदात्तु भिद्यते ॥ ११५ ॥
तथाहं सत्त्वसंतानं क्लेशदोषैः सदूषितैः ।
इन्द्रियाणां बलं ज्ञात्वा नयं देशेमि प्राणिनाम् ॥ ११६ ॥
न क्लेशेन्द्रियभेदेन शासनं भिद्यते मम ।
एकमेव भवेद्यानं मार्गमष्टाङ्गिकं शिवम् ॥ ११७ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—अनित्यता अनित्यतेति भगवन् सर्वतीर्थकरैर्विकल्प्यते । त्वया च सर्वदेशनापाठे देश्यते—अनित्या बत संस्कारा उत्पादव्ययधर्मिण इति । तत्किमियं भगवंस्तथ्या मिथ्येति ? कतिप्रकारा भगवन् अनित्यता ? भगवानाह—अष्टप्रकारा हि महामते सर्वतीर्थकरैरनित्यता कल्प्यते, न तु मया । कतमाष्टप्रकारा ? तत्र केचित्तावन्महामते आहुः—प्रारम्भविनिवृत्तिरनित्यतेति । प्रारम्भो N 205 नाम महामते उत्पादोऽनुत्पादोऽनित्यता । अन्ये संस्थानविनिवृत्तिमनित्यतां वर्णयन्ति । अन्ये रूपमेवानित्यमिति । अन्ये रूपस्य विकारान्तरमनित्यताम् । नैरन्तर्यप्रबन्धेन स्वरसभङ्गभेदं सर्वधर्माणां क्षीरदधिपरिणामविकारान्तरवददृष्टनष्टा सर्वभावेषु प्रवर्तते न नित्यतेति । अन्ये पुनर्भावमनित्यतां कल्पयन्ति । अन्ये भावाभावमनित्यतां कल्पयन्ति । अन्ये अनुत्पादानित्यतां सर्वधर्माणामनित्यतायाश्च तदन्तर्गतत्वात् । तत्र महामते भावाभावानित्यता नाम यदुत भूतभौतिकस्वलक्षणविनाशानुपलब्धिरप्रवृत्तिर्भूतस्वभावस्य । तत्र अनुत्पादानित्यता नाम यदुत नित्यमनित्यं सदसतोरप्रवृत्तिः सर्वधर्माणामदर्शनं परमाणुप्रविचयाददर्शनम् । अनुत्पादस्यैतदधिवचनं नोत्पादस्य । एतद्धि महामते अनुत्पादानित्यताया लक्षणं यस्यानवबोधात्सर्वतीर्थकरा उत्पादानित्यतावादे प्रपतन्ति ॥

पुनरपरं महामते यस्य भावो नित्यता, तस्य स्वमतिविकल्पेनैव नित्यता नानित्यता N 206 भावः । तत्कस्य हेतोः ? यदुत स्वयमविनाशित्वादनित्यतायाः । इह महामते सर्वभावानामभावोऽनित्यतायाः कार्यम् । न चानित्यतामन्तरेण सर्वभावाभाव उपलभ्यते दण्डशिलामुद्गरान्यतरभेद्यभेदकवत् । अन्योन्याविशेषदर्शनं दृष्टम् । अतोऽनित्यता कारणं सर्वभावाभावः कार्यम् । न च कार्यकारणयोर्विशेषोऽस्ति इयमनित्यता इदं कार्यमिति । अविशेषात्कार्यकारणयोर्नित्याः सर्वभावा अहेतुकत्वाद्भावस्य । सर्वभावाभावो हि महामते अहेतुकः । न

च बालपृथग्जना अवबुध्यन्ते। न च कारणं विसदृशं कार्यं जनयति। अथ जनयेत्, तेषामनित्यता सर्वभावानां विसदृशं कार्यं स्यात्, कार्यकारणविभागो न स्यात्। दृष्टश्च कार्यकारणविभागस्तेषाम्। यदि वा अनित्यता अभावः स्यात्, क्रियाहेतुभावलक्षणपतितश्च स्यात्, एकभावेन वा परिसमाप्तः स्यात्सर्वभावेषु। क्रियाहेतुभावलक्षणपतितत्वाच्च स्वयमेवानित्यता नित्या स्यात्, अनित्यत्वादयः सर्वभावा नित्याः स्युर्नित्या एव भवेयुः॥

अथ सर्वभावान्तर्गता अनित्यता, तेन त्र्यध्वपतिता स्यात्। तत्र यदतीतं रूपं तत्तेन
N 207 सह विनष्टम्। अनागतमपि नोत्पन्नम्। रूपानुत्पत्तितया वर्तमानेनापि रूपेण सहाभिन्नलक्षणम्। रूपं च भूतानां संनिवेशविशेषः। भूतानां भौतिकस्वभावो न विनश्यते अन्यानन्यविवर्जितत्वात्। सर्वतीर्थकराणामविनाशात्सर्वभूतानां सर्वं त्रिभवं भूतभौतिकं यत्रोत्पादस्थितिविकारः प्रज्ञप्यते। किमन्यदनित्यं भूतभौतिकविनिर्मुक्तं यस्यानित्यता कल्प्यते तीर्थकरैः? भूतानि च न प्रवर्तन्ते न निवर्तन्ते स्वभावलक्षणाभिनिवेशात्॥

तत्र प्रारम्भविनिवृत्तिर्नाम अनित्यता—न पुनर्भूतानि भूतान्तरमारभन्ते परस्परविलक्षणस्वलक्षणान्न विशेषः प्रारभ्यते। तदविशेषात्तेषामपुनरारम्भाद्द्विधायोगादनारम्भस्यानित्यताबुद्धयो भवन्ति॥

तत्र संस्थानविनिवृत्तिर्नाम अनित्यता—यदुत न भूतभौतिकं विनश्यति आ प्रलयात्। प्रलयो नाम महामते आ परमाणोः प्रविचयपरीक्षा विनाशो भूतभौतिकस्य संस्थानस्यान्यथाभूतदर्शनाद्दीर्घह्रस्वानुपलब्धिः। न परमाणुभूतेषु विनाशाद्भूतानां संस्थानविनिवृत्तिदर्शनात्सांख्यवादे प्रपतन्ति॥

N 208 तत्र संस्थानानित्यता नाम—यदुत यस्य रूपमेवानित्यं तस्य संस्थानस्यानित्यता न भूतानाम्। अथ भूतानामनित्यता स्यात्, लोकसंव्यवहाराभावः स्यात्। लोकसंव्यवहाराभावाल्लोकायतिकदृष्टिपतितः स्यात्, वाग्मात्रत्वात्सर्वभावानाम्। न पुनः स्वलक्षणोत्पत्तिदर्शनात्॥

तत्र विकारानित्यता नाम—यदुत रूपस्यान्यथाभूतदर्शनं न भूतानां सुवर्णसंस्थानभूषणविकारदर्शनवत्। न सुवर्णं भावाद्विनश्यति किं तु भूषणसंस्थानविनाशो भवति॥

ये चान्ये विकारपतिताः, एवमाद्यादिभिः प्रकारैस्तीर्थकरैरनित्यतादृष्टिर्विकल्प्यते। भूतानि हि दह्यमानान्यग्निना स्वलक्षणत्वान्न दह्यन्ते। अन्योन्यतः स्वलक्षणविगमान्महाभूतभौतिकभावोच्छेदः स्यात्॥

मम तु महामते न नित्या नानित्या। तत्कस्य हेतोः? यदुत बाह्यभावानभ्युपगमात्त्रिभवचित्तमात्रोपदेशाद्विचित्रलक्षणानुपदेशान्न प्रवर्तते न निवर्तते महाभूतसंनिवेशविशेषः। न भूतभौतिकत्वाद्विकल्पस्य द्विधा प्रवर्तते ग्राह्यग्राहकालक्षणता। विकल्पस्य
N 209 प्रवृत्तिद्वयपरिज्ञानाद्बाह्यभावाभावदृष्टिविगमात्स्वचित्तमात्रावबोधाद्विकल्पो विकल्पाभिसंस्कारेण प्रवर्तते नानभिसंस्कुर्वतः। चित्तविकल्पभावाभावविगमाल्लौकिकलोकोत्तरतमानां सर्व-

धर्माणां न नित्यता नानित्यता । स्वचित्तदृश्यमात्रानवबोधात्कुदृष्टयान्तद्वयपतितया संतत्या सर्वतीर्थकरैः स्वविकल्पानवबोधात्कथापुरुषैरसिद्धपूर्वैरनित्यता कल्प्यते । त्रिविधं च महामते सर्वतीर्थकरलौकिकलोकोत्तरतमानां सर्वधर्माणां लक्षणं वाग्विकल्पविनिःसृतानाम् । न च बालपृथग्जना अवबुध्यन्ते ॥

तत्रेदमुच्यते—

प्रारम्भविनिवृत्तिं च संस्थानस्यान्यथात्वताम् ।
भावमनित्यतां रूपं तीर्थ्याः कल्पेन्ति मोहिताः ॥ ११८ ॥
भावानां नास्ति वै नाशं भूता भूतात्मना स्थिताः ।
नानादृष्टिनिमग्नास्ते तीर्थ्याः कल्पेन्ति नित्यताम् ॥ ११९ ॥
कस्यचिन्न हि तीर्थ्यस्य विनाशो न च संभवः ।
भूता भूतात्मना नित्याः कस्य कल्पेन्त्यनित्यताम् ॥ १२० ॥
चित्तमात्रमिदं सर्वं द्विधा चित्तं प्रवर्तते ।
ग्राह्यग्राहकभावेन आत्मात्मीयं न विद्यते ॥ १२१ ॥
ब्रह्मादिस्थानपर्यन्तं चित्तमात्रं वदाम्यहम् ।
चित्तमात्रविनिर्मुक्तं ब्रह्मादिर्नोपलभ्यते ॥ १२२ ॥ N 210

इति लङ्कावतारे महायानसूत्रे अनित्यतापरिवर्तस्तृतीयः ॥



N 211 # ४ अभिसमयपरिवर्तो नाम चतुर्थः ।

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—देशयतु मे भगवान् सर्वबोधिसत्त्वश्रावकप्रत्येकबुद्धनिरोधक्रमानुसंधिलक्षणकौशल्यं येन क्रमानुसंधिलक्षणकौशल्येन अहं च अन्ये च बोधिसत्त्वा महासत्त्वा निरोधसुखसमापत्तिमुखेन न प्रतिमुह्येम, न च श्रावकप्रत्येकबुद्धतीर्थ्यकरव्यामोहे प्रपतेम । भगवानाह—तेन महामते शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् ॥

भगवांस्तस्यैतदवोचत्—षष्ठीं महामते भूमिमुपादाय बोधिसत्त्वा महासत्त्वाः सर्वश्रावकप्रत्येकबुद्धाश्च निरोधं समापद्यन्ते । सप्तम्यां भूमौ पुनश्चित्तक्षणे चित्तक्षणे बोधिसत्त्वा महासत्त्वाः सर्वभावस्वभावलक्षणव्युदासात्समापद्यन्ते, न तु श्रावकप्रत्येकबुद्धाः । तेषां हि श्रावकप्रत्येकबुद्धानामाभिसंस्कारिकी ग्राह्यग्राहकलक्षणपतिता च निरोधसमापत्तिः । अतस्ते सप्तम्यां भूमौ चित्तक्षणे चित्तक्षणे समापद्यन्ते—मा सर्वधर्माणामविशेषलक्षणप्राप्तिः स्यादिति ।
N 212 विचित्रलक्षणाभावश्च । कुशलाकुशलस्वभावलक्षणानवबोधात्सर्वधर्माणां समापत्तिर्भवति । अतः सप्तम्यां भूमौ चित्तक्षणे चित्तक्षणे समापत्तिकौशल्यं नास्ति येन समापद्येरन् ॥

अष्टम्यां महामते भूमौ बोधिसत्त्वानां महासत्त्वानां श्रावकप्रत्येकबुद्धानां च चित्तमनोमनोविज्ञानविकल्पसंज्ञाव्यावृत्तिर्भवति । प्रथमषष्ठ्यां भूमौ चित्तमनोमनोविज्ञानमात्रं त्रैधातुकं समनुपश्यति आत्मात्मीयविगतं स्वचित्तविकल्पोद्भवम्, न च बाह्यभावलक्षणवैचित्र्यपतितमन्यत्र स्वचित्तमेव । द्विधा बालानां ग्राह्यग्राहकभावेन परिणाम्य स्वज्ञानं न चावबोध्यन्ते अनादिकालदौष्ठुल्यविकल्पप्रपञ्चवासनावासिताः ॥

अष्टम्यां महामते निर्वाणं श्रावकप्रत्येकबुद्धबोधिसत्त्वानाम् । बोधिसत्त्वाश्च समाधिबुद्धैर्विधार्यन्ते तस्मात्समाधिसुखाद्, येन न परिनिर्वान्ति अपरिपूर्णत्वात्तथागतभूमेः । सर्वकार्यप्रतिप्रस्रम्भणं च स्यात्, यदि न संधारयेत्, तथागतकुलवंशोच्छेदश्च स्यात् ।
N 213 अचिन्त्यबुद्धमाहात्म्यं च देशयन्ति ते बुद्धा भगवन्तः । अतो न परिनिर्वान्ति । श्रावकप्रत्येकबुद्धास्तु समाधिसुखेनापह्रियन्ते । अतस्तेषां तत्र परिनिर्वाणबुद्धिर्भवति ॥

सप्तसु महामते भूमिषु चित्तमनोमनोविज्ञानलक्षणपरिचयकौशल्यात्मात्मीयग्राह्यग्राहधर्मपुद्गलनैरात्म्यप्रवृत्तिनिवृत्तिस्वसामान्यलक्षणपरिचयचतुःप्रतिसंविद्विनिश्चयकौशल्यवशितास्वादसुखभूमिक्रमानुप्रवेशबोधिपाक्षिकधर्मविभागः क्रियते मया—मा बोधिसत्त्वा महासत्त्वाः स्वसामान्यलक्षणानवबोधाद्भूमिक्रमानुसंध्यकुशलास्तीर्थकरकुदृष्टिमार्गे प्रपतेयुः, इत्यतो भूमिक्रमव्यवस्था क्रियते । न तु महामते अत्र कश्चित्प्रवर्तते वा निवर्तते वा अन्यत्र स्वचित्तदृश्यमात्रमिदं यदुत भूमिक्रमानुसंधिस्त्रैधातुकविचित्रोपचारश्च । न च बाला अवबुध्यन्ते । अनवबोधाद्बालानां भूमिक्रमानुसंधिव्यपदेशं त्रैधातुकविचित्रोपचारश्च व्यवस्थाप्यते बुद्धधर्मालया च ॥

पुनरपरं महामते श्रावकप्रत्येकबुद्धा अष्टम्यां बोधिसत्त्वभूमौ निरोधसमापत्तिसुख-मदमत्ताः स्वचित्तदृश्यमात्राकुशलाः स्वसामान्यलक्षणावरणवासनापुद्गलधर्मनैरात्म्यग्राहक- N 214 दृष्टिपतिता विकल्पनिर्वाणमतिबुद्धयो भवन्ति, न विविक्तधर्ममतिबुद्धयः । बोधिसत्त्वाः पुनर्महामते निरोधसमाधिसुखमुखं दृष्ट्वा पूर्वप्रणिधानकृपाकरुणोपेता निष्ठपदगतिविभागज्ञा न परिनिर्वान्ति । परिनिर्वृताश्च ते विकल्पस्याप्रवृत्तत्वात् । ग्राह्यग्राहकविकल्पस्तेषां विनिवृत्तः । स्वचित्तदृश्यमात्राववोधात् सर्वधर्माणां विकल्पो न प्रवर्तते । चित्तमनोमनो-विज्ञानबाह्यभावस्वभावलक्षणाभिनिवेशं विकल्पयति । तेन पुनर्बुद्धधर्महेतुर्न प्रवर्तते, ज्ञान-पूर्वकः प्रवर्तते तथागतस्वप्रत्यात्मभूम्यधिगमनतया स्वप्नपुरुषौघोत्तरणवत् ॥

तद्यथा पुनर्महामते कश्चिच्छयितः स्वप्नान्तरे महाव्यायामौत्सुक्येन महौघादात्मान-मुत्तारयेत् । स चानुत्तीर्ण एव प्रतिबुध्येत । प्रतिबुद्धश्च सन्नेवमुपपरीक्षेत—किमिदं सत्यमुत मिथ्येति । स एवं समनुपश्येत्—नेदं सत्यं न मिथ्या अन्यत्र दृष्टश्रुतमतविज्ञातानुभूत-विकल्पवासनाविचित्ररूपसंस्थानानादिकालविकल्पपतिता नास्त्यस्तिदृष्टिविकल्पपरिवर्जिता मनोविज्ञानानुभूताः स्वप्ने दृश्यन्ते । एवमेव महामते बोधिसत्त्वा महासत्त्वा अष्टम्यां बोधि- N 215 सत्त्वभूमौ विकल्पस्याप्रवृत्तिं दृष्ट्वा प्रथमसप्तमीभूमिसंचारात्सर्वधर्माभिसमयान्मायादिधर्म-समतया सर्वधर्मौत्सुक्यग्राह्यग्राहकविकल्पोपरतं चित्तचैतसिकविकल्पप्रसरं दृष्ट्वा बुद्धधर्मेषु प्रयुज्यन्ते । अनधिगतानामधिगमाय प्रयोग एष महामते निर्वाणं बोधिसत्त्वानां न विनाशः चित्तमनोमनोविज्ञानविकल्पसंज्ञाविगमाच्च अनुत्पत्तिकधर्मक्षान्तिप्रतिलम्भो भवति । न चात्र महामते परमार्थे क्रमो न क्रमानुसंधिर्निराभासविकल्पविविक्तधर्मोपदेशात् ॥

तत्रेदमुच्यते—

चित्तमात्रे निराभासे विहारा बुद्धभूमि च ।
एतद्धि भाषितं बुद्धैर्भाषन्ते भाषयन्ति च ॥ १ ॥

चित्तं हि भूमयः सप्त निराभासा त्विहाष्टमी ।
द्वे हि भूमी विहारोऽत्र शेषा भूमिर्ममात्मिका ॥ २ ॥

प्रत्यात्मवेद्या शुद्धा च भूमिरेषा ममात्मिका ।
माहेश्वरं परं स्थानमकनिष्ठो विराजते ॥ ३ ॥

हुताशनस्य हि यथा निश्चेरुस्तस्य रश्मयः ।
चित्रा मनोहराः सौम्यास्त्रिभवं निर्मिणन्ति ते ॥ ४ ॥

निर्माय त्रिभवं किंचित्किंचिद्वै पूर्वनिर्मितम् ।
तत्र देशेमि यानानि एषा भूमिर्ममात्मिका ॥ ५ ॥

दशमी तु भवेत्प्रथमा प्रथमा चाष्टमी भवेत् । N 216
नवमी सप्तमी चापि सप्तमी चाष्टमी भवेत् ॥ ६ ॥

द्वितीया च तृतीया स्याच्चतुर्थी पञ्चमी भवेत् ।
तृतीया च भवेत्षष्ठी निराभासे क्रमः कुतः ॥ ७ ॥

इति लङ्कावतारे अभिसमयपरिवर्तश्चतुर्थः ॥

## ५ तथागतनित्यानित्यप्रसङ्गपरिवर्तो नाम पञ्चमः ।

N 217 अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—किं भगवंस्तथागतोऽर्हन् सम्यक्संबुद्धो नित्य उताहोऽनित्यः? भगवानाह—न महामते तथागतो नित्यो नानित्यः। तत्कस्य हेतोः? यदुत उभयदोषप्रसङ्गात्। उभयथा हि महामते दोषप्रसङ्गः स्यात्। नित्ये सति कारणप्रसङ्गः स्यात्। नित्यानि हि महामते सर्वतीर्थकराणां कारणान्यकृतकानि च। अतो न नित्यस्तथागतोऽकृतकनित्यत्वात्। अनित्ये सति कृतकप्रसङ्गः स्यात्। स्कन्धलक्ष्यलक्षणाभावात्स्कन्धविनाशादुच्छेदः स्यात्। न चोच्छेदो भवति तथागतः। सर्वं हि महामते कृतकमनित्यं घटपटतृणकाष्ठेष्टकादि। सर्वानित्यत्वप्रसङ्गात् सर्वज्ञज्ञानसंभारवैयर्थ्यं भवेत्कृतकत्वात्। सर्वं हि कृतकं तथागतः स्याद्विशेषहेत्वभावात्। अत एतस्मात्कारणान्महामते न नित्यो नानित्यस्तथागतः॥

पुनरपि महामते न नित्यस्तथागतः। कस्मात्? आकाशसंभारवैयर्थ्यप्रसङ्गात्। तद्यथा महामते आकाशं न नित्यं नानित्यं नित्यानित्यव्युदासादेकत्वान्यत्वोभयत्वानुभयत्व- N 218 नित्यानित्यत्वदोषैरवचनीयः॥

पुनरपरं महामते शशहयखरोष्ट्रमण्डूकसर्पमक्षिकामीनविषाणतुल्यः स्यादनुत्पादनित्यत्वात्। अतोऽनुत्पादनित्यत्वप्रसङ्गान्न नित्यस्तथागतः॥

पुनरपरं महामते अस्त्यसौ पर्यायो येन नित्यस्तथागतः। तत्कस्य हेतोः? यदुत अभिसमयाधिगमज्ञाननित्यत्वान्नित्यस्तथागतः। अभिसमयाधिगमज्ञानं हि महामते नित्यं तथागतानामर्हतां सम्यक्संबुद्धानाम्। उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्मता धर्मनियामता धर्मस्थितिता सर्वश्रावकप्रत्येकबुद्धतीर्थकराभिसमयेषु। न तु गगने धर्मस्थितिर्भवति। न च बालपृथग्जना अवबुध्यन्ते। अधिगमज्ञानं च महामते तथागतानां प्रज्ञाज्ञानप्रभावितम्। न महामते तथागता अर्हन्तः सम्यक्संबुद्धाश्चित्तमनोमनोविज्ञानस्कन्धधात्वायतनाविद्यावासनाप्रभाविताः। सर्वं हि महामते त्रिभवमभूतविकल्पप्रभवम्। न च तथागता अभूतविकल्पप्रभवाः। द्वये हि सति महामते नित्यता चानित्यता च भवति, नाद्वयात्। द्वयं हि महामते विविक्तमद्वयानुत्पादलक्षणात्सर्वधर्माणाम्। अत एतस्मात्कारणान्महामते तथागता अर्हन्तः सम्यक्संबुद्धा न नित्या नानित्याः। यावन्महामते वाग्वि- N 219 कल्पः प्रवर्तते, तावन्नित्यानित्यदोषः प्रसज्यते। विकल्पबुद्धिक्षयान्महामते नित्यानित्यग्राहो निवार्यते बालानां न तु विविक्तदृष्टिबुद्धिक्षयात्॥

तत्रेदमुच्यते—

नित्यानित्यविनिर्मुक्तान् नित्यानित्यप्रभावितान्।
ये पश्यन्ति सदा बुद्धान् न ते दृष्टिवशं गताः॥ १॥

समुदागमवैयर्थ्यं नित्यानित्ये प्रसज्यते ।
विकल्पबुद्धिवैकल्यान्नित्यानित्यं निवार्यते ॥ २ ॥

यावत्प्रतिज्ञा क्रियते तावत्सर्वं ससंकरम् ।
स्वचित्तमात्रं संपश्यन् न विवादं समारभेत् ॥ ३ ॥

इति लङ्कावतारे तथागतनित्यानित्यत्वप्रसङ्गपरिवर्तः पञ्चमः ॥



# ६ क्षणिकपरिवर्तो नाम षष्ठः ।

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमध्येषते स्म–देशयतु मे भगवान्, देशयतु मे सुगतः स्कन्धधात्वायतनानां प्रवृत्तिनिवृत्तिम्। असत्यात्मनि कस्य प्रवृत्तिर्वा निर्वृत्तिर्वा ? बालाश्च प्रवृत्तिनिवृत्त्याश्रिता दुःखक्षयानवबोधान्निर्वाणं न प्रजानन्ति। भगवानाह–तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् ॥

भगवांस्तस्यैतदवोचत्–तथागतगर्भो महामते कुशलाकुशलहेतुकः सर्वजन्मगतिकर्ता प्रवर्तते नटवद्गतिसंकट आत्मात्मीयवर्जितः। तदनवबोधात्त्रिसंगतिप्रत्ययक्रियायोगः प्रवर्तते। न च तीर्थ्या अवबुध्यन्ते कारणाभिनिवेशाभिनिविष्टाः। अनादिकालविविधप्रपञ्चदौष्ठुल्यवासनावासितः आलयविज्ञानसंशब्दितोऽविद्यावासनभूमिजैः सप्तभिर्विज्ञानैः सह महोदधितरंगवन्नित्यमव्युच्छिन्नशरीरः प्रवर्तते अनित्यतादोषरहित
N 221
आत्मवादविनिवृत्तोऽत्यन्तप्रकृतिपरिशुद्धः। तदन्यानि विज्ञानान्युत्पन्नापवर्गाणि मनोमनोविज्ञानप्रभृतीनि क्षणिकानि, सप्ताप्यभूतपरिकल्पहेतुजनितसंस्थानाकृतिविशेषसमवायावलम्बीनि नामनिमित्ताभिनिविष्टानि स्वचित्तदृश्यरूपलक्षणावबोधकानि सुखदुःखाप्रतिसंवेदकानि अमोक्षकारणानि नामनिमित्तपर्युत्थानरागजनितजनकतद्धेत्वालम्बानि। तेषां चोपात्तानामिन्द्रियाख्यानां परिक्षयनिरोधे समनन्तरानुत्पत्तेरन्येषां स्वमतिविकल्पसुखदुःखाप्रतिसंवेदिनां संज्ञावेदितनिरोधसमापत्तिसमापन्नानां चतुर्ध्यानसत्यविमोक्षकुशलानां योगिनां विमोक्षबुद्धिर्भवत्यप्रवृत्तेः ॥

अपरावृत्ते च तथागतगर्भशब्दसंशब्दिते आलयविज्ञाने नास्ति सप्तानां प्रवृत्तिविज्ञानानां निरोधः। तत्कस्य हेतोः ? तद्धेत्वालम्बनप्रवृत्तत्वाद्विज्ञानानाम्, अविषयत्वाच्च सर्वश्रावकप्रत्येकबुद्धतीर्थ्ययोगयोगिनां स्वपुद्गलनैरात्म्यावबोधात्स्वसामान्यलक्षणपरिग्रहात्स्कन्धधात्वायतनानां प्रवर्तते तथागतगर्भः। पञ्चधर्मस्वभावधर्मनैरात्म्यदर्शनान्निवर्तते भूमिक्रमानुसंधिपरावृत्त्या। नान्यतीर्थ्यमार्गदृष्टिभिर्विचारयितुं शक्यते। ततोऽचलायां भूमौ बोधि-
N 222
सत्त्वभूमौ प्रतिष्ठितो दशसमाधिसुखमुखमार्गान् प्रतिलभते। समाधिबुद्धैः संधार्यमाणोऽचिन्त्यबुद्धधर्मस्वप्रणिधानव्यवलोकनतया समाधिसुखभूतकोट्या विनिवार्य प्रत्यात्मार्यगतिगम्यैः सर्वश्रावकप्रत्येकबुद्धतीर्थकरासाधारणैर्योगमार्गैर्दशार्यगोत्रमार्गं प्रतिलभते, कायं च ज्ञानमनोमयं समाध्यभिसंस्काररहितम्। तस्मात्तर्हि महामते तथागतगर्भः आलयविज्ञानसंशब्दितो विशोधयितव्यो विशेषार्थिभिर्बोधिसत्त्वैर्महासत्त्वैः ॥

यदि हि महामते आलयविज्ञानसंशब्दितस्तथागतगर्भोऽत्र न स्यादिति असति महामते तथागतगर्भे आलयविज्ञानसंशब्दिते न प्रवृत्तिर्न निवृत्तिः स्यात्। भवति च महामते प्रवृत्तिर्निवृत्तिश्च बालार्याणाम्। स्वप्रत्यात्मार्यगतिदृष्टधर्मसुखविहारेण च विहरन्ति योगिनोऽनिक्षिप्तधुरा दुष्प्रतिवेधाश्च। महामते अयं तथागतगर्भालयविज्ञानगोचरः सर्व-

श्रावकप्रत्येकबुद्धतीर्थ्यवितर्कदर्शनानां प्रकृतिपरिशुद्धोऽपि सन् अशुद्ध इवागन्तुक्लेशोपक्लिष्टतया तेषामाभाति न तु तथागतानाम्। तथागतानां पुनर्महामते करतलामलकवत्प्रत्यक्षगोचरो भवति। एतदेव महामते मया श्रीमालां देवीमधिकृत्य देशनापाठे अन्यांश्च सूक्ष्मनिपुण- N 223
विशुद्धबुद्धीन् बोधिसत्त्वानधिष्ठाय तथागतगर्भ आलयविज्ञानसंशब्दितः सप्तभिर्विज्ञानैः सह प्रवृत्त्यभिनिविष्टानां श्रावकाणां धर्मनैरात्म्यप्रदर्शनार्थं श्रीमालां देवीमधिष्ठाय तथागतविषयो देशितो न श्रावकप्रत्येकबुद्धान्यतीर्थकरतर्कविषयोऽन्यत्र महामते तथागतविषय एव तथागतगर्भ आलयविज्ञानविषयस्त्वत्सदृशानां च सूक्ष्मनिपुणमतिबुद्धिप्रभेदकानां बोधिसत्त्वानां महासत्त्वानामर्थप्रतिशरणानां नो तु यथारुतदेशनापाठाभिनिविष्टानां सर्वान्यतीर्थ्यश्रावकप्रत्येकबुद्धानाम्। तस्मात्तर्हि महामते त्वया अन्यैश्च बोधिसत्त्वैर्महासत्त्वैः सर्वतथागतविषयेऽस्मिंस्तथागतगर्भालयविज्ञानपरिज्ञाने योगः करणीयः। न श्रुतमात्रसंतुष्टैर्भवितव्यम्॥

तत्रेदमुच्यते—

गर्भस्तथागतानां हि विज्ञानैः सप्तभिर्युतः।
प्रवर्ततेऽद्वयो ग्राहात्परिज्ञानान्निवर्तते॥ १॥
बिम्बवद्दृश्यते चित्तमनादिमतिभावितम्।
अर्थाकारो न चार्थोऽस्ति यथाभूतं विपश्यतः॥ २॥
अङ्गुल्यग्रं यथा बालो न गृह्णाति निशाकरम्। N 224
तथा ह्यक्षरसंसक्तस्तत्त्वं वेत्ति न मामकम्॥ ३॥
नटवन्नृत्यते चित्तं मनो विदूषसादृशम्।
विज्ञानं पञ्चभिः सार्धं दृश्यं कल्पेति रङ्गवत्॥ ४॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमध्येषते स्म—देशयतु मे भगवान्, देशयतु मे सुगतः पञ्चधर्मस्वभावविज्ञाननैरात्म्यद्वयप्रभेदगतिलक्षणम्, येन नैरात्म्यद्वयप्रभेदगतिलक्षणेन अहं च अन्ये च बोधिसत्त्वा महासत्त्वाः सर्वभूमिक्रमानुसंधिष्वेतान् धर्मान् विभावयेम, यथा तैर्धर्मैः सर्वबुद्धधर्मानुप्रवेशो भवेत्। सर्वबुद्धधर्मानुप्रवेशाच्च यावत्तथागतस्वप्रत्ययात्मभूमिप्रवेशः स्यादिति। भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु। भाषिष्येऽहं ते। साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत्। भगवांस्तस्यैतदवोचत्—पञ्चधर्मस्वभावविज्ञाननैरात्म्यद्वयप्रभेदगतिलक्षणं ते महामते देशयिष्यामि। यदुत नाम निमित्तं विकल्पः सम्यग्ज्ञानं तथता च तथागतप्रत्यात्मार्यगतिप्रवेशः शाश्वतोच्छेदसदसद्दृष्टिविवर्जितो दृष्टधर्मसुखसमापत्तिसुखविहार N 225
आमुखीभवति योगयोगिनाम्। तत्र महामते पञ्चधर्मस्वभावविज्ञाननैरात्म्यद्वयस्वचित्तदृश्यबाह्यभावाभावानवबोधाद्विकल्पः प्रवर्तते बालानां न त्वार्याणाम्॥

महामतिराह–कथं पुनर्भगवन् बालानां विकल्पः प्रवर्तते, न त्वार्याणाम्? भगवानाह–नामसंज्ञासंकेताभिनिवेशेन महामते बालाश्चित्तमनुसरन्ति। अनुसरन्तो विविधलक्षणोपचारेण आत्मात्मीयदृष्टिपतिताशया वर्णपुष्कलताभिनिविशन्ते। अभिनिविशन्तश्च अज्ञानावृताः संरज्यन्ते। संरक्ता रागद्वेषमोहजं कर्माभिसंस्कुर्वन्ति। अभिसंस्कृत्य पुनः पुनः कोशकारकीटका इव स्वविकल्पपरिवेष्टितमतयो गतिसमुद्रकान्तारप्रपतिता घटियन्त्रवन्नातिप्रवर्तन्ते। न च प्रजानन्ति मोहान्मायामरीच्युदकचन्द्रस्वभावकल्पनात्मात्मीयरहितान् सर्वधर्मानभूतविकल्पोदितांल्लक्ष्यलक्षणापगतान् भङ्गोत्पादस्थितिगतिविनिवृत्तान् स्वचित्तदृश्यविकल्पप्रभवानीश्वरकालाणुप्रधानप्रभवान्। नामनिमित्तानुप्लुतेन महामते बाला निमित्तमनुसरन्ति॥

N 226 तत्र निमित्तं पुनर्महामते यच्चक्षुर्विज्ञानस्याभासमागच्छति रूपसंज्ञकम्। एवं श्रोत्रघ्राणजिह्वाकायमनोविज्ञानानां शब्दगन्धरसस्प्रष्टव्यधर्मसंज्ञकमेतन्निमित्तमिति वदामि। तत्र विकल्पः पुनर्महामते येन नाम समुदीरयति। निमित्तव्यञ्जकमिदम्–एवमिदं नान्यथेति हस्त्यश्वरथपदातिस्त्रीपुरुषादिकसंज्ञकं तद्विकल्पः प्रवर्तते। सम्यग्ज्ञानं पुनर्महामते येन नामनिमित्तयोरनुपलब्धिः। अन्योन्यागन्तुकत्वादप्रवृत्तिर्विज्ञानस्य अनुच्छेदाशाश्वततः सर्वतीर्थकरश्रावकप्रत्येकबुद्धभूम्यपातनत्वात्सम्यग्ज्ञानमित्युच्यते। पुनरपरं महामते येन सम्यग्ज्ञानेन बोधिसत्त्वो महासत्त्वो न नाम भावीकरोति, न च निमित्तमभावीकरोति। समारोपापवादान्तद्वयकुदृष्टिविवर्जितं नामनिमित्तार्थयोरप्रवृत्तिविज्ञानम्। एवमेतां तथतां वदामि। तथताव्यवस्थितश्च महामते बोधिसत्त्वो महासत्त्वो निराभासगोचरप्रतिलाभित्वात्प्रमुदितां बोधिसत्त्वभूमिं प्रतिलभते॥

स प्रतिलभ्य प्रमुदितां बोधिसत्त्वभूमिं व्यावृत्तः सर्वतीर्थ्यापायगतिभ्यो भवति लोकोत्तरधर्मगतिसमवसृतः। लक्षणपरिचयान्मायादिपूर्वकां सर्वधर्मगतिं विभावयन् स्वप्रत्यात्मार्यधर्मगतिलक्षणं तर्कदृष्टिविनिवृत्तकौतुकोऽनुपूर्वेण यावद्धर्ममेघा भूमिरिति।
N 227 धर्ममेघानन्तरं यावत्समाधिवलवशिताभिज्ञाकुसुमितां तथागतभूमिं प्रतिलभते। स प्रतिलभ्य सत्त्वपरिपाचनतया विचित्रैर्निर्माणकिरणैर्विराजते जलचन्द्रवत्। अष्टापदसुनिबद्धधर्मा नानाधिमुक्तिकतया सत्त्वेभ्यो धर्मं देशयति। कायं मनोविज्ञप्तिरहितम्। एतन्महामते तथताप्रवेशात्प्रतिलभन्ते बोधिसत्त्वा महासत्त्वाः॥

पुनरपि महामतिराह–किं पुनर्भगवन् पञ्चसु धर्मेष्वन्तर्गतास्त्रयः स्वभावा उत स्वलक्षणसिद्धाः? भगवानाह–अत्रैव महामते त्रयः स्वभावा अन्तर्गताः, अष्टौ च विज्ञानानि, द्वे च नैरात्म्ये। तत्र नाम च निमित्तं च परिकल्पितः स्वभावो वेदितव्यः। यः पुनर्महामते तदाश्रयप्रवृत्तो विकल्पश्चित्तचैत्तसंशब्दितो युगपत्कालोदित आदित्य इव रश्मिसहितो विचित्रलक्षणस्वभावो विकल्पाधारकः, स महामते स्वभावः परतन्त्र इत्युच्यते। सम्यग्ज्ञानं तथता च महामते अविनाशत्वात्स्वभावः परिनिष्पन्नो वेदितव्यः॥

पुनरपरं महामते स्वचित्तदृश्यमभिनिविश्यमानं विकल्पोऽष्टधा भिद्यते। निमित्तस्याभूतलक्षणपरिकल्पितत्वादात्मात्मीयग्राहद्वयव्युपशमान्नैरात्म्यद्वयमाजायते। एषु महामते पञ्चसु N 228 धर्मेषु सर्वबुद्धधर्मा अन्तर्गताः, भूमिविभागानुसंधिश्च श्रावकप्रत्येकबुद्धबोधिसत्त्वानाम्, तथागतानां च प्रत्यात्मार्यज्ञानप्रवेशः॥

पुनरपरं महामते पञ्च धर्माः—निमित्तं नाम विकल्पस्तथता सम्यग्ज्ञानं च। तत्र महामते निमित्तं यत्संस्थानाकृतिविशेषाकाररूपादिलक्षणं दृश्यते तन्निमित्तम्। यत्तस्मिन्निमित्ते घटादिसंज्ञाकृतकम्—एवमिदं नान्यथेति, तन्नाम। येन तन्नाम समुदीरयति निमित्ताभिव्यञ्जकं समधर्मेति वा, स महामते चित्तचैत्तसंशब्दितो विकल्पः। यन्नामनिमित्तयोरत्यन्तानुपलब्धिता बुद्धिप्रलयादन्योन्याननुभूतापरिकल्पितत्वादेषां धर्माणां सा तथतेति। तत्त्वं भूतं निश्चयो निष्ठा प्रकृतिः स्वभावोऽनुपलब्धिस्तत्तथालक्षणम्। मया अन्यैश्च तथागतैरनुगम्य यथावद्देशितं प्रज्ञप्तं विवृतमुत्तानीकृतम्, यत्रानुगम्य सम्यगवबोधानुच्छेदाशाश्वततो विकल्पस्याप्रवृत्तिः स्वप्रत्यात्मार्यज्ञानानुकूलं तीर्थकरपक्षपरपक्षश्रावकप्रत्येकबुद्धागतिलक्षणं N 229 तत्सम्यग्ज्ञानम्। एते च महामते पञ्च धर्माः। एतेष्वेव त्रयः स्वभावाः, अष्टौ च विज्ञानानि, द्वे च नैरात्म्ये, सर्वबुद्धधर्माश्चान्तर्गताः। अत्र ते महामते स्वमतिकौशलं करणीयम्, अन्यैश्च कारयितव्यम्। न परप्रणेयेन भवितव्यम्॥

तत्रेदमुच्यते—

पञ्च धर्माः स्वभावश्च विज्ञानान्यष्ट एव च।
द्वे नैरात्म्ये भवेत्कृत्स्नो महायानपरिग्रहः॥ ५॥
नामनिमित्तसंकल्पाः स्वभावद्वयलक्षणम्।
सम्यग्ज्ञानं तथात्वं च परिनिष्पन्नलक्षणम्॥ ६॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—यत्पुनरेतदुक्तं भगवता देशनापाठे यथा गङ्गानदीवालुकासमास्तथागता अतीता अनागता वर्तमानाश्च। तत्किमिदं भगवन् यथारुतार्थग्रहणं कर्तव्यम्, आहोस्विदन्यः कश्चिदर्थान्तरविशेषोऽस्तीति? तदुच्यतां भगवन्। भगवानाह—न महामते यथारुतार्थग्रहणं कर्तव्यम्। न च महामते गङ्गानदीवालुकाप्रमाणतया त्र्यध्वकबुद्धप्रमाणता[1] भवति। तत्कस्य हेतोः? यदुत लोकातिशयातिक्रान्तत्वान्महामते दृष्टान्तोऽदृष्टान्तः सदृशासदृशत्वात्। न च महामते N 230 तथागता अर्हन्तः सम्यक्संबुद्धाः सदृशासदृशं लोकातिशयातिक्रान्तं दृष्टान्तं प्राविष्कुर्वन्ति। अन्यत्र उपमामात्रमेतन्महामते मयोपन्यस्तम्, तैश्च तथागतैः। यथा गङ्गानदीवालुकासमास्तथागता अर्हन्तः सम्यक्संबुद्धा इति नित्यानित्याभिनिवेशाभिनिविष्टानां बालपृथग्जनानां तीर्थकराशयकुदृष्टियुक्तानां संसारभवचक्रानुसारिणामुद्वेजनार्थम्—कथमेते उद्विग्ना भवगतिचक्रसंकटाद्विशेषार्थिनो विशेषमारभेरन्निति सुलभबुद्धत्वप्रदर्शनार्थं न नोदुम्बरपुष्पतुल्य-

१ Mss. त्र्यध्वैक° for त्र्यध्वक°.

स्तथागतानामुत्पाद इति कृत्वा वीर्यमारप्स्यन्ते। देशनापाठे तु मया वैनेयजनतापेक्षया
उदुम्बरपुष्पसुदुर्लभप्रादुर्भावास्तथागता इति देशितम्। न च महामते उदुम्बरपुष्पं
केनचिद्दृष्टपूर्वं न द्रक्ष्यते। तथागताः पुनर्महामते लोके दृष्टाः, दृश्यन्ते चैतर्हि। न
स्वनयप्रत्यवस्थानकथामधिकृत्य उदुम्बरपुष्पसुदुर्लभप्रादुर्भावास्तथागता इति। स्वनयप्रत्यव-
स्थानकथायां महामते निर्दिश्यमानायां लोकातिशयातिक्रान्ता दृष्टान्ता युक्ताः क्रियन्तेऽश्रद्धे-
N 231 यत्वात्। अश्रद्धेयं स्याद्बालपृथग्जनानां च। स्वप्रत्यात्मार्यज्ञानगोचरे न दृष्टान्ता न
प्रवर्तन्ते। तत्त्वं च तथागताः। अतस्तेषु दृष्टान्ता नोपन्यस्यन्ते॥

किं तु उपमामात्रमेतन्महामते कृतं यदुत गङ्गानदीवालुकासमास्तथागताः समा न विषमा अकल्पाविकल्पनतः। तद्यथा महामते गङ्गायां नद्यां वालुका मीनकच्छपशिशुमारनक्रमहिषसिंहहस्त्यादिभिः संक्षोभ्यमाणा न कल्पयन्ति न विकल्पयन्ति—संक्षोभ्यामहे न वेति निर्विकल्पाः स्वच्छा मलव्यपेताः। एवमेव महामते तथागतानामर्हतां सम्यक्संबुद्धानां स्वप्रत्यात्मार्यज्ञानगङ्गामहानदीबलाभिज्ञावशितावालुकाः सर्वतीर्थकरबालमीनपरप्रवादिभिः संक्षोभ्यमाणा न कल्पयन्ति न विकल्पयन्ति। तथागतपूर्वप्रणिहितत्वात्सर्वसुखसमापत्तिपरिपूर्या सत्त्वानां न कल्पयन्ति न विकल्पयन्ति। अतस्ते गङ्गानदीवालुकासमास्तथागता निर्विशिष्टा अनुनयप्रतिघापगतत्वात्॥

तद्यथा महामते गङ्गायां नद्यां वालुका पृथिवीलक्षणस्वभावत्वात्पृथिवी, कल्पोद्दाहे
N 232 दह्यमानापि न पृथिवीस्वभावं विजहाति। न च महामते पृथिवी दह्यते तेजोधातुप्रति-
बद्धत्वादन्यत्र बालपृथग्जना वितथतापतितया संतत्या दह्यमानां कल्पयन्ति, न च दह्यते
तदग्निहेतुभूतत्वात्। एवमेव महामते तथागतानां धर्मकायो गङ्गानदीवालुकासमोऽविनाशी।
तद्यथा महामते नद्यां गङ्गायां वालुका अप्रमाणाः, एवमेव महामते तथागतानां रश्म्यालोको-
ऽप्रमाणः सत्त्वपरिपाकसंचोदनमुपादाय सर्वबुद्धपर्षन्मण्डलेषु प्रसर्प्यते तथागतैः। तद्यथा
महामते गङ्गायां नद्यां वालुका न वालुकास्वभावान्तरमारभन्ते, वालुकावस्था एव वालुकाः,
एवमेव महामते तथागतानामर्हतां सम्यक्संबुद्धानां संसारे न प्रवृत्तिर्न निवृत्तिः, भवप्रवृत्त्यु-
च्छिन्नहेतुत्वात्। तद्यथा महामते गङ्गायां नद्यां वालुका अपकृष्टा अपि न प्रज्ञायन्ते,
प्रक्षिप्ता अपि न प्रज्ञायन्ते, महामते एवमेव तथागतानां ज्ञानं सत्त्वपरिपाकयोगेन न क्षीयते
न वर्धते, अशरीरत्वाद्धर्मस्य। शरीरवतां हि महामते नाशो भवति नाशरीरवताम्। धर्म-
श्चाशरीरः। तद्यथा महामते गङ्गायां नद्यां वालुका निष्पीड्यमाना घृततैलार्थिभिर्घृततैलादि-
N 233 विरहिताः, एवमेव महामते तथागताः सत्त्वदुःखैर्निष्पीड्यमाना धर्मधात्वीश्वरप्रणिधान-
सुखं न विजहति महामते महाकरुणोपेतत्वात्, यावत्सर्वसत्त्वा न निर्वाप्यन्ते तथागतैः।
तद्यथा महामते गङ्गायां नद्यां वालुकाः प्रवाहानुकूलाः प्रवहन्ति नानुदके, एवमेव
महामते तथागतानां सर्वबुद्धधर्मदेशना निर्वाणप्रवाहानुकूला संवर्तते। तेन गङ्गानदी-
वालुकासमास्तथागता इत्युच्यन्ते। नायं महामते गत्यर्थस्तथागतेषु प्रवर्तते। विनाशो

महामते गत्यर्थो भवति । न च महामते संसारस्य पूर्वा कोटिः प्रज्ञायते । अप्रज्ञायमाना कथं गत्यर्थेन निर्देक्ष्यामि? गत्यर्थो महामते उच्छेदः । न च बालपृथग्जनाः संप्रजानन्ति ॥

महामतिराह–तद्यदि भगवन् पूर्वा कोटिर्न प्रज्ञायते सत्त्वानां संसरताम्, तत्कथं मोक्षः प्रज्ञायते प्राणिनाम्? भगवानाह–अनादिकालप्रपञ्चदौष्ठुल्यविकल्पवासनाहेतुविनिवृत्तिर्महामते स्वचित्तदृश्यबाह्यार्थपरिज्ञानाद्विकल्पस्याश्रयपरावृत्तिर्महामते मोक्षो न नाशः । अतो नानन्तकथा महामते किंचित्कारी भवति । विकल्पस्यैव महामते पर्यायोऽनन्तकोटिरिति । न चात्र विकल्पादन्यत्किंचित्सत्त्वान्तरमस्ति, अध्यात्मं वा बहिर्धा वा परीक्ष्यमाणं N 234 बुद्ध्या । ज्ञानज्ञेयविविक्ता हि महामते सर्वधर्माः । अन्यत्र स्वचित्तविकल्पापरिज्ञानाद्विकल्पः प्रवर्तते, तदवबोधान्निवर्तते ॥

तत्रेदमुच्यते–

गङ्गायां वालुकासमान् ये पश्यन्ति विनायकान् ।
अनाशगतिनिष्ठान् वै ते पश्यन्ति तथागतान् ॥ ७ ॥
गङ्गायां वालुका यद्वत्सर्वदोषैर्विवर्जिताः ।
वाहानुकूला नित्याश्च तथा बुद्धस्य बुद्धता ॥ ८ ॥

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्–देशयतु भगवान्, देशयतु मे सुगतस्तथागतोऽर्हन् सम्यक्संबुद्धः सर्वधर्माणां क्षणभङ्गं भेदलक्षणं चैषाम् । तत्कथं भगवन् सर्वधर्माः क्षणिकाः? भगवानाह–तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्–सर्वधर्माः सर्वधर्मा इति महामते यदुत कुशलाकुशलाः संस्कृतासंस्कृता लौकिकलोकोत्तराः सावद्यानवद्याः सास्रवानास्रवा उपात्तानुपात्ताः । N 235 संक्षेपेण महामते पञ्चोपादानस्कन्धाश्चित्तमनोमनोविज्ञानवासनाहेतुकाश्चित्तमनोमनोविज्ञानवासनापुष्टैर्बालपृथग्जनैः कुशलाकुशलेन परिकल्प्यन्ते । समाधिसुखसमापत्तयो महामते दृष्टधर्मसुखविहारभावेन आर्याणां कुशलानास्रवा इत्युच्यन्ते । कुशलाकुशलाः पुनर्महामते यदुत अष्टौ विज्ञानानि । कतमान्यष्टौ? यदुत तथागतगर्भ आलयविज्ञानसंशब्दितो मनो मनोविज्ञानं च पञ्च च विज्ञानकायास्तीर्थ्यानुवर्णिताः । तत्र महामते पञ्च विज्ञानकाया मनोविज्ञानसहिता कुशलाकुशलक्षणपरंपराभेदभिन्नाः संततिप्रबन्धनाभिन्नशरीराः प्रवर्तमानाः प्रवर्तन्ते । प्रवृत्य च विनश्यन्ति । स्वचित्तदृश्यानवबोधात्समनन्तरनिरोधेऽन्यद्विज्ञानं प्रवर्तते । संस्थानाकृतिविशेषग्राहकं मनोविज्ञानं पञ्चभिर्विज्ञानकायैः सह संप्रयुक्तं प्रवर्तते क्षणकालानवस्थायि । तत्क्षणिकमिति वदामि । क्षणिकं पुनर्महामते आलयविज्ञानं तथागतगर्भसंशब्दितं मनःसहितं प्रवृत्तिविज्ञानवासनाभिः क्षणिकमनास्रववासनाभिरक्षणिकम् । न च बालपृथग्जना अवबुध्यन्ते क्षणिकवादाभिनिविष्टाः क्षणिकाक्षणिकतामिमां N 23 सर्वधर्माणाम् । तदनवबोधादुच्छेददृष्ट्या असंस्कृतानपि धर्मान्नाशयिष्यन्ति ।

असंसारिणो महामते पञ्च विज्ञानकाया अननुभूतसुखदुःखा अनिर्वाणहेतवः । तथागतगर्भः पुनर्महामते अनुभूतसुखदुःखहेतुसहितः प्रवर्तते निवर्तते च चतसृभिर्वासनाभिः संमूर्च्छितः। न च बाला अवबुध्यन्ते क्षणिकदृष्टिविकल्पवासितमतयः ॥

पुनरपरं महामते समधारणं कल्पस्थिताः सुवर्णवज्रजिनधातुप्राप्तिविशेषा अभङ्गिनः। यदि पुनर्महामते अभिसमयप्राप्तिः क्षणिका स्यात्, अनार्यत्वमार्याणां स्यात्। न च अनार्यत्वमार्याणां भवति। सुवर्णं वज्रं च महामते समधारणं कल्पस्थिता अपि तुल्यमाना न हीयन्ते न वर्धन्ते। तत्कथं बालैः क्षणिकार्थे विकल्प्यते आध्यात्मिकबाह्यानां सर्वधर्माणामसंधाभाष्यकुशलैः?

पुनरपि महामतिराह—यत्पुनरेतदुक्तं भगवता—षट्पारमितां परिपूर्य बुद्धत्वमवाप्यत इति। तत्कतमास्ताः षट्पारमिताः? कथं च परिपूरिं गच्छन्ति? भगवानाह—त्रय एते N 237 महामते पारमिताभेदाः। कतमे त्रयः? यदुत लौकिकलोकोत्तरलोकोत्तरतमाः। तत्र महामते लौकिक्यः पारमिता आत्मात्मीयग्राहाभिनिवेशाभिनिविष्टाः। अन्तद्वयग्राहिणो विचित्रभवोपपत्त्यायतनार्थं रूपादिविषयाभिलाषिणो दानपारमितां परिपूरयन्ति। एवं शीलक्षान्तिवीर्यध्यानप्रज्ञापारमितां महामते परिपूरयन्ति बालाः। अभिज्ञाश्चाभिनिर्हरन्ति ब्रह्मत्वाय। तत्र लोकोत्तराभिः पारमिताभिः श्रावकप्रत्येकबुद्धा निर्वाणग्राहपतिताशया दानादिषु प्रयुज्यन्ते यथैव बाला आत्मसुखनिर्वाणाभिलाषिणः। लोकोत्तरतमाः पुनर्महामते स्वचित्तदृश्यविकल्पमात्रग्रहणात्स्वचित्तद्वयावबोधादप्रवृत्तेर्विकल्पस्य उपादानग्रहणाभावात्स्वचित्तरूपलक्षणानभिनिवेशाद्दानपारमिता सर्वसत्त्वहितसुखार्थमाजायते बोधिसत्त्वानां महासत्त्वानां परमयोगयोगिनाम्। यत्तत्रैवालम्बने विकल्पस्याप्रवृत्तिं शीलयन्ति, तच्छीलं पारमिता च सा। या तस्यैव विकल्पस्याप्रवृत्तिक्षमणता ग्राह्यग्राहकपरिज्ञया, सा क्षान्तिपारमिता। येन वीर्येण N 238 पूर्व[1]रात्रापररात्रं घटते योगानुकूलदर्शनाद्विकल्पस्य व्यावृत्तेः, सा वीर्यपारमिता। यद्विकल्पनिवृत्तेस्तीर्थ्यनिर्वाणग्राहापतनं सा ध्यानपारमिता। तत्र प्रज्ञापारमिता यदा स्वचित्तविकल्पाभावादाबुद्धिप्रविचयात्प्रतिविचिन्वन् अन्तद्वये न पतति आश्रयपरावृत्तिपूर्वकर्मविनाशतः, स्वप्रत्यात्मार्यगतिप्रतिलम्भाय प्रयुज्यते, सा प्रज्ञापारमिता। एता महामते पारमिताः। एष पारमितार्थः ॥

तत्रेदमुच्यते—

शून्यमनित्यं क्षणिकं बालाः कल्पेन्ति संस्कृतम्।
नदीदीपबीजदृष्टान्तैः क्षणिकार्थो विकल्प्यते ॥ ९ ॥
निर्व्यापारं क्षणिकं विविक्तं क्षयवर्जितम्।
अनुत्पत्तिश्च धर्माणां क्षणिकार्थं वदाम्यहम् ॥ १० ॥

---

१ N पूर्वरात्रात्पर° for पूर्वरात्रापर°.

उत्पत्त्यनन्तरं भङ्गं न वै देशेमि बालिशान् ।
नैरन्तर्येण भावानां विकल्पः स्पन्दते गतौ ॥ ११ ॥

सा विद्या कारणं तेषां चित्तानां संप्रवर्तिकम् ।
अन्तरा किमवस्थासौ यावद्रूपं न जायते ॥ १२ ॥

समनन्तरप्रध्वस्तं चित्तमन्यत्प्रवर्तते ।
रूपं न तिष्ठते काले किमालम्ब्य प्रवर्त्स्यते ॥ १३ ॥ N 239

यस्माद्यत्र प्रवर्तते चित्तं वितथहेतुकम् ।
न प्रसिद्धं कथं तस्य क्षणभङ्गोऽवधार्यते ॥ १४ ॥

योगिनां हि समापत्तिः सुवर्णं जिनधातवः ।
आभास्वरविमानाश्च अभेद्या लोककारणात् ॥ १५ ॥

स्थितयः प्राप्तिधर्माश्च बुद्धानां ज्ञानसंपदः ।
भिक्षुत्वं समयप्राप्तिर्दृष्टा वै क्षणिकाः कथम् ॥ १६ ॥

गन्धर्वपुरमायाद्या रूपा वै क्षणिका न किम् ।
अभूतिकाश्च भूताश्च भूताः केचित्कारागताः ॥ १७ ॥

इति लङ्कावतारे क्षणिकपरिवर्तः षष्ठः ॥

———:०:———

## N 240 ७ नैर्माणिकपरिवर्तो नाम सप्तमः ।

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वः पुनरपि भगवन्तमेतदवोचत्—अर्हन्तः
पुनर्भगवता व्याकृता अनुत्तरायां सम्यक्संबोधौ । अपरिनिर्वाणधर्मकाश्च सत्त्वास्तथागतत्वे ।
यस्यां च रात्रौ तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धो यस्यां च रात्रौ परिनिर्वृतः,
एतस्मिन्नन्तरे भगवता एकमप्यक्षरं नोदाहृतं न प्रव्याहृतम् । सदा समाहिताश्च तथागता न
वितर्कयन्ति न व्यवचारयन्ति । निर्माणानि च निर्माय तैस्तथागतकृत्यं कुर्वन्ति । किं
कारणं च विज्ञानानां क्षणपरंपराभेदलक्षणं निर्दिश्यते ? वज्रपाणिश्च सततसमितं नित्यानु-
बद्धः । पूर्वा च कोटिर्न प्रज्ञायते । निर्वृतिश्च प्रज्ञाप्यते । माराश्च मारकर्माणि च कर्मप्लोत-
यश्च । चञ्चामाणविका सुन्दरिका प्रव्राजिका यथा धौतपात्रादीनि च भगवन् कर्मावरणानि
दृश्यन्ते । तत्कथं भगवता सर्वाकारज्ञता प्राप्ता अप्रहीणैर्दोषैः ? भगवानाह—तेन हि महामते
शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो
N 241 महासत्त्वो भगवतः प्रत्यश्रौषीत् । भगवांस्तस्यैतदवोचत्—निरुपधिशेषं निर्वाणधातुं संधाय
बोधिसत्त्वचर्यां च चरितवतां प्रोत्साहनार्थम् । सन्ति हि महामते बोधिसत्त्वचर्याचारिणः
इह अन्येषु च बुद्धक्षेत्रेषु । येषां श्रावकयाननिर्वाणाभिलाषस्तेषां श्रावकयानरुचिव्यावर्तनार्थं
महायानगतिप्रोत्साहनार्थं च तन्निर्मितश्रावकान्निर्माणकायैर्व्याकरोति, न च धर्मताबुद्धैः ।
एतत्संधाय महामते श्रावकव्याकरणं निर्दिष्टम् । न हि महामते श्रावकप्रत्येकबुद्धानां
क्लेशावरणप्रहाणविशेषो विमुक्त्येकरसतया । नात्र ज्ञेयावरणप्रहाणम् । ज्ञेयावरणं पुनर्महामते
धर्मनैरात्म्यदर्शनविशेषाद्विशुध्यते । क्लेशावरणं तु पुद्गलनैरात्म्यदर्शनाभ्यासपूर्वकं प्रहीयते,
मनोविज्ञाननिवृत्तेः । धर्मावरणविनिर्मुक्तिः पुनरालयविज्ञानवासनाविनिवृत्तेर्विशुध्यति ।
पूर्वधर्मस्थितितां संधाय अपूर्वचरमस्य चाभावात्पूर्वप्रहीणैरेवाक्षरैस्तथागतो न वितर्क्य न
विचार्य धर्मं देशयति । संप्रजानकारित्वादमुषितस्मृतित्वाच्च न वितर्कयति न विचारयति,
N 242 चतुर्वासनाभूमिप्रहीणत्वाच्च्युतिद्वयविगमात्क्लेशज्ञेयावरणद्वयप्रहाणाच्च ॥

सप्त महामते मनोमनोविज्ञानचक्षुर्विज्ञानादयः क्षणिकाः वासनाहेतुत्वात्कुशला-
नास्रवपक्षरहिताः न संसारिणः । तथागतगर्भः पुनर्महामते संसरति निर्वाणसुखदुःखहेतुकः ।
न च बालपृथग्जना अवबुध्यन्ते शून्यताविक्षिप्तमतयः । निर्मितनैर्माणिकानां महामते
तथागतानां वज्रपाणिः पार्श्वानुगतो न मौलानां तथागतानामर्हतां सम्यक्संबुद्धानाम् ।
मौलो हि महामते तथागतः सर्वप्रमाणेन्द्रियविनिवृत्तः सर्वबालश्रावकप्रत्येकबुद्धतीर्थ्यानाम् ।
दृष्टधर्मसुखविहारिणस्तमागच्छन्त्यभिसमयधर्मज्ञानक्षान्त्या । अतो वज्रपाणिस्तान्नानुबध्नाति ।
सर्वे हि निर्मितबुद्धा न कर्मप्रभवाः । न तेषु तथागतो न चान्यत्र तेभ्यस्तथागतः ।
कुम्भकारालम्बनादिप्रयोगेणेव सत्त्वकृत्यानि करोति, लक्षणोपेतं च देशयति, न तु स्वनय-
प्रत्यवस्थानकथां स्वप्रत्यात्मार्यगतिगोचरम् । पुनरपरं महामते षण्णां विज्ञानकायानां निरोधा-

दुच्छेददृष्टिमाश्रयन्ति बालपृथग्जनाः, आलयानवबोधाच्छाश्वतदृष्टयो भवन्ति । स्वमति-विकल्पस्य महामते पूर्वा कोटिर्न प्रज्ञायते । स्वमतिविकल्पस्यैव विनिवृत्तेर्मोक्षः प्रज्ञायते । चतुर्वासनाप्रहाणात्सर्वदोषप्रहाणम् ॥ N 243

तत्रेदमुच्यते—

त्रीणि यानान्ययानं च बुद्धानां नास्ति निर्वृतिः ।
बुद्धत्वे व्याकृताः सर्वे वीतदोषाश्च देशिताः ॥ १ ॥
अभिसमयान्तिकं ज्ञानं निरुपादिगतिस्तथा ।
प्रोत्साहना[1] च लीनानामेतत्संधाय देशितम् ॥ २ ॥
बुद्धैरुत्पादितं ज्ञानं मार्गस्तैरेव देशितः ।
यान्ति तेनैव नान्येन अतस्तेषां न निर्वृतिः ॥ ३ ॥
[2]भवकामरूपदृष्टीनां वासना वै चतुर्विधा ।
मनोविज्ञानसंभूता आलयं च मनःस्थिताः ॥ ४ ॥
मनोविज्ञाननेत्राद्यैरुच्छेदश्चाप्यनित्यतः ।
शाश्वतं च अनाद्येन निर्वाणमतिदृष्टिनाम् ॥ ५ ॥

इति लङ्कावतारसूत्रे नैर्माणिकपरिवर्तः सप्तमः ॥



१ N प्रोत्साहनां च; T प्रोत्साहनाच for प्रोत्साहना च. २ N भाव° for भव°.

N 244

# ८ मांसभक्षणपरिवर्तो नामाष्टमः ।

अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तं गाथाभिः परिपृच्छय पुनरप्यध्येषते स्म—देशयतु मे भगवांस्तथागतोऽर्हन् सम्यक्संबुद्धो मांसभक्षणे गुणदोषम्, येन अहं च अन्ये च बोधिसत्त्वा महासत्त्वा अनागतप्रत्युत्पन्नकाले सत्त्वानां क्रव्यादसत्त्वगतिवासनावासितानां मांसभोजगृद्धाणां रसतृष्णाप्रहाणाय धर्मं देशयाम, यथा च ते क्रव्यादभोजिनः सत्त्वा विराग्य[1] रसतृष्णां धर्मरसाहारकाङ्क्षया सर्वसत्त्वैकपुत्रकप्रेमानुगताः परस्परं महामैत्रीं प्रतिलभेरन् । प्रतिलभ्य सर्वबोधिसत्त्वभूमिषु कृतयोग्याः क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुध्येरन् । श्रावकप्रत्येकबुद्धभूम्या वा विश्रम्य अनुत्तरां ताथागतीं भूमिमुपसर्पयेयुः । दुराख्यातधर्मैरपि तावद्भगवन्नन्यतीर्थिकैर्लोकायतदृष्ट्यभिनिविष्टैः सदसत्पक्षोच्छेदशाश्वतवादिभिर्मांसं निवार्यते भक्ष्यमाणम् । स्वयं च न भक्ष्यते, प्रागेव कृपैकरसे सम्यक्संबुद्धे प्रणीते

N 245

लोकनाथे । तत्र शासने मांसं स्वयं च भक्ष्यते, भक्ष्यमाणं च न निवार्यते । तत्साधु भगवान् सर्वलोकानुकम्पकः सर्वसत्त्वैकपुत्रकसमदर्शी महाकारुणिकोऽनुकम्पामुपादाय मांसभक्षणे गुणदोषान् देशयतु मे, यथा अहं च अन्ये च बोधिसत्त्वास्तथत्वाय सत्त्वेभ्यो धर्मं देशयेम । भगवानाह—तेन हि महामते शृणु, साधु च सुष्ठु च मनसिकुरु । भाषिष्येऽहं ते । साधु भगवन्निति महामतिर्बोधिसत्त्वो महासत्त्वो भगवतः प्रत्यश्रौषीत् ॥

भगवांस्तस्यैतदवोचत्—अपरिमितैर्महामते कारणैर्मांसं सर्वमभक्ष्यं कृपात्मनो बोधिसत्त्वस्य । तेभ्यस्तूपदेशमात्रं वक्ष्यामि । इह महामते अनेन दीर्घेणाध्वना संसरतां प्राणिनां नास्त्यसौ कश्चित्सत्त्वः सुलभरूपो यो न माताभूत्पिता वा भ्राता वा भगिनी वा पुत्रो वा दुहिता वा अन्यतरान्यतरो वा स्वजनबन्धुबन्धूभूतो वा । तस्य अन्यजन्मपरिवृत्ताश्रयस्य मृगपशुपक्षियोन्यन्तर्भूतस्य बन्धोर्बन्धुभूतस्य वा सर्वभूतात्मभूतानुपागन्तुकामेन सर्वजन्तुप्राणिभूतसंभूतं मांसं कथमिव भक्ष्यं स्याद्बुद्धधर्मकामेन बोधिसत्त्वेन महासत्त्वेन ? राक्षसस्यापि महामते तथागतानामिमां धर्मसुधर्मतामुपश्रुत्य उपगतरक्षभावाः कृपालवा भवन्ति मांसभक्षणविनिवृत्ताः, किमुत धर्मकामा जनाः । एवं तावन्महामते तेषु तेषु जातिपरिवर्तेषु सर्वसत्त्वाः

N 245

स्वजनबन्धुभावसंज्ञाः सर्वसत्त्वैकपुत्रकसंज्ञाभावनार्थं मांसं सर्वमभक्ष्यम् । कृपात्मनो बोधिसत्त्वस्याभक्ष्यं मांसम् । व्यभिचारादपि महामते मांसं सर्वमभक्ष्यं चारित्रवतो बोधिसत्त्वस्य । श्वखरोष्ट्राश्वबलीवर्दमानुषमांसादीनि हि महामते लोकस्याभक्ष्याणि मांसानि । तानि च महामते वीथ्यन्तरेष्वौरभ्रिका भक्ष्याणीति कृत्वा मूल्यहेतोर्विक्रीयन्ते यतः, ततोऽपि महामते मांसमभक्ष्यं बोधिसत्त्वस्य ॥

शुक्रशोणितसंभवादपि महामते शुचिकामतामुपादाय बोधिसत्त्वस्य मांसमभक्ष्यम् । उद्वेजनकरत्वादपि महामते भूतानां मैत्रीमिच्छतो योगिनो मांसं सर्वमभक्ष्यं बोधिसत्त्वस्य ।

---

१ N विनाद्य for विराग्य which is based on T.

तद्यथापि महामते डोम्बचाण्डालकैवर्तादीन् पिशिताशिनः सत्त्वान् दूरत एव दृष्ट्वा श्वानः प्रभयन्ति भयेन, मरणप्राप्ताश्चैके भवन्ति—अस्मानपि मारयिष्यन्तीति । एवमेव महामते अन्येऽपि खभूजलसंनिश्रितान् सूक्ष्मजन्तवो ये मांसाशिनो दर्शनाद्दूरादेव पटुना घ्राणेना- N 247
घ्राय गन्धं राक्षसस्येव मानुषा द्रुतम[1]पसर्पन्ति, मरणसंदेहाश्चैके भवन्ति । तस्मादपि च महामते उद्वेजनकरत्वान्महामैत्रीविहारिणो योगिनो मांसमभक्ष्यं बोधिसत्त्वस्य अनार्यजनजुष्टं दुर्गन्धम् । अकीर्तिकरत्वादपि महामते आर्यजनविवर्जितत्वाच्च मांसमभक्ष्यं बोधिसत्त्वस्य । ऋषिभोजनाहारो हि महामते आर्यजनो न मांसरुधिराहारः, इत्यतोऽपि बोधिसत्त्वस्य मांसमभक्ष्यम् ॥

बहुजनचित्तानुरक्षणतयापि अपवादपरिहारं चेच्छतः शासनस्य महामते मांसमभक्ष्यं कृपात्मनो बोधिसत्त्वस्य । तद्यथा महामते भवन्ति लोके शासनापवादवक्तारः । किंचित्तेषां श्रामण्यम्, कुतो वा ब्राह्मण्यम्? यन्नामैते पूर्वर्षिभोजनान्यपास्य क्रव्यादा इवामिषाहाराः परिपूर्णकुक्षयः खभूमिजलसंनिश्रितान् सूक्ष्मांस्त्रासयन्तो जन्तून् समुत्रासयन्त इमं लोकं समन्ततः प[2]र्यटन्ति । निहतमेषां श्रामण्यम्, ध्वस्तमेषां ब्राह्मण्यम्, नास्त्येषां धर्मो न विनयः, इत्यनेकप्रकारप्रतिहतचेतसः शासनमेवापवदन्ति । तस्माद्बहुजनचित्तानुरक्षणतयापि N 248
अपवादपरिहारं चेच्छतः शासनस्य महामते मांसं सर्वमभक्ष्यं कृपात्मनो बोधिसत्त्वस्य ॥

मृतशवदुर्गन्धप्रतिकूलसामान्यादपि महामते मांसमभक्ष्यं बोधिसत्त्वस्य । मृतस्यापि हि महामते मनुष्यस्य मांसे दह्यमाने तदन्यप्राणिमांसे च, न कश्चिद्गन्धविशेषः । सममुभयमांसयोर्दह्यमानयोर्दौर्गन्ध्यम् । अतोऽपि महामते शुचिकामस्य योगिनः सर्वं मांसमभक्ष्यं बोधिसत्त्वस्य ॥

श्मशानिकानां च महामते अरण्यवनप्रस्थान्यमनुष्यावचराणि प्रान्तानि शयनासनान्यध्यावसतां योगिनां योगाचाराणां मैत्रीविहारिणां विद्याधराणां विद्यां साधयितुकामानां विद्यासाधनमोक्षविघ्नकरत्वान्महायानसंप्रस्थितानां कुलपुत्राणां कुलदुहितॄणां च सर्वयोगसाधनान्तरायकरमित्यपि समनुपश्यतां महामते स्वपरात्महितकामस्य मांसं सर्वमभक्ष्यं बोधिसत्त्वस्य । रूपालम्बनविज्ञानप्रत्ययास्वादजनकत्वादपि सर्वभूतात्मभूतस्य कृपात्मनः सर्वं मांसमभक्ष्यं बोधिसत्त्वस्य । देवता अपि चैनं परिवर्जयन्तीति कृत्वा महामते कृपात्मनः सर्वं N 249
मांसमभक्ष्यं बोधिसत्त्वस्य । मुखं चास्य परमदुर्गन्धि इहैव तावज्जन्मनि, इत्यपि कृत्वा महामते कृपात्मनः सर्वं मांसमभक्ष्यं बोधिसत्त्वस्य । दुःखं स्वपिति, दुःखं प्रतिबुध्यते । पापकांश्च रोमहर्षणान् स्वप्नान् पश्यन्ति । शून्यागारस्थितस्य चैकाकिनो रहोगतस्य विहरतोऽस्यामनुष्यास्तेजो हरन्ति । उत्त्रस्यन्त्यपि, कदाचित्संत्रस्यन्त्यपि, संत्रासमकस्माच्चापद्यन्ते, आहारे च मात्रां न जानाति नाप्यशितपीतखादितास्वादितस्य सम्यग्रसपरिणामपुष्ट्यादि समासादयति, क्रिमिजन्तुप्रचुरकुष्ठनिदानकोष्ठश्च भवति व्याधिबहुलम्, न च प्रतिकूलसंज्ञां प्रतिलभते ।

---

१ N उपसर्पयन्ति for अपसर्पन्ति. २ N पर्यटन्,

पुत्रमांसभैषज्यवदाहारं देशयंश्चाहं महामते कथमिव अनार्यजनसेवितमार्यजनविवर्जितमेवमनेकदोषावहमनेकगुणविवर्जितमनृषिभोजनप्रणीतमकल्प्यं मांसरुधिराहारं शिष्येभ्योऽनुज्ञाप्यामि ?

N 250 अनुज्ञातवान् पुनरहं महामते सर्वार्यजनसेवितमनार्यजनविवर्जितमनेकगुणवाहकमनेकदोषविवर्जितं सर्वपूर्वर्षिप्रणीतं भोजनम्, यदुत शालियवगोधूममुद्गमाषमसूरादिसर्पिस्तैलमधुफाणितगुडखण्डमत्स्यण्डिकादिषु समुपपद्यमानं भोजनं कल्प्यमिति कृत्वा । न च महामते अनागतेऽध्वनि एकेषां मोहपुरुषाणां विविधविनयविकल्पवादिनां क्रव्यादकुलवासितावासितानां रसतृष्णाव्यवसितानामिदं प्रणीतं भोजनं प्रतिभाष्यते । न तु महामते पूर्वजिनकृताधिकाराणामवरोपितकुशलमूलानां श्राद्धानामविकल्पानां बहुलानां शाक्यकुलकुलीनानां कुलपुत्राणां कुलदुहितॄणां कायजीवितभोगानध्यवसितानामरसगृध्राणामलोलुपानां कृपालूनां सर्वभूतात्मभूततामुपगन्तुकामानां सर्वसत्त्वैकपुत्रकप्रियदर्शिनां बोधिसत्त्वानां महासत्त्वानामिति वदामि ॥

N 251 भूतपूर्वं महामते अतीतेऽध्वनि राजाभूत्सिंहसौदासो नाम । स मांसभोजनाहारातिप्रसङ्गेन प्रतिसेवमानो रसतृष्णाध्यवसानपरमतया मांसानि मानुष्याण्यपि भक्षितवान् । तन्निदानं च मित्रामात्यज्ञातिबन्धुवर्गेणापि परित्यक्तः, प्रागेव पौरजानपदैः । स्वराज्यविषयपरित्यागाच्च महद्व्यसनमासादितवान् मांसहेतोः ॥

इन्द्रेणापि च महामते देवाधिपत्यं प्राप्तेन ([1]पूर्वाभूत्वा) पूर्वजन्ममांसादवासनादोषाच्छ्येनरूपमास्थाय कपोतवेषरूपधारी विश्वकर्मा समभिद्रुतोऽभूत् । तुलायां चात्मानमारोपित आसीत् । यस्माद्राजा अनपराधिभूतानुकम्पकः शिबी दुःखेन महता लम्भितः । तदेवमनेकजन्माभ्यस्तमपि महामते देवेन्द्रभूतस्य शक्रस्यापि सतः स्वपरदोषावहनमभूत्, प्रागेव तदन्येषाम् ॥

अन्येषां च महामते नरेन्द्रभूतानां सतामश्वेनापहृतानामटव्यां पर्यटमानानां सिंह्या
252 सह मैथुनं गतवतां जीवितभयादपत्यानि चोत्पादितवन्तः सिंहसंत्रासान्वयात्कल्माषपादप्रभृतयो नृपपुत्राः पूर्वजन्ममांसाददोषवासनतया मनुष्येन्द्रभूता अपि सन्तो मांसादा अभूवन् । इहैव च महामते जन्मनि सप्तकुटीरकेऽपि ग्रामे प्रचुरमांसलौल्यादतिप्रसङ्गेन निषेवमाना मानुषमांसादा घोरा डाका वा डाकिन्यश्च संजायन्ते । जातिपरिवर्ते च महामते तथैव मांसरसाध्यवसानतया सिंहव्याघ्रद्वीपिवृकतरक्षुमार्जारजम्बुकोलूकादिप्रचुरमांसादयोनिषु प्रचुरतरपिशिताशना राक्षसादिघोरतरयोनिषु विनिपात्यन्ते । यत्र विनिपतितानां दुःखेन मानुष्ययोनिरपि समापद्यते, प्रागेव निर्वृतिः । इत्येवमादयो महामते मांसाददोषाः प्रागेव निषेवमानानां समुपजायन्ते, विपर्ययाच्च भूयांसो गुणाः । न च महामते बालपृथग्जना

१ T om. पूर्वाभूत्वा.

एतांश्चान्यांश्च गुणदोषानवबुध्यन्ते । एवमादिगुणदोषदर्शनान्महामते मांसं सर्वमभक्ष्यं कृपात्मनो बोधिसत्त्वस्येति वदामि ॥

यदि च महामते मांसं न कथंचन केचन भक्षयेयुः, न तन्निदानं घातेरन् । N 253
मूल्यहेतोर्हि महामते प्रायः प्राणिनो निरपराधिनो वध्यन्ते स्वल्पादन्यहेतोः । कष्टं महामते रसतृष्णायामतिसेवतां मांसानि मानुषान्यपि मानुषैर्भक्ष्यन्ते, किं पुनरितरमृगपक्षिप्राणिसंभूतमांसानि । प्रायो महामते मांसरसतृष्णार्तैरिदं तथा तथा जालयन्त्रमाविद्धं मोहपुरुषैः, यच्छाकुनिकौरभ्रककैवर्तादयः खेचरभूचरजलचरान् प्राणिनोऽनपराधिनोऽनेकप्रकारं मूल्यहेतोर्विशसन्ति । न चैषां महामते किंकनीकृतरूक्षचेतसां राक्षसानामिव गतघृणानां कदाचिदपि प्राणिषु प्राणिसंज्ञया घातयतां भक्षयतां न घृणोत्पद्यते ॥

न च महामते अकृतकमकारितमसंकल्पितं नाम मांसं कल्प्यमस्ति यदुपादाय अनुजानीयां श्रावकेभ्यः । भविष्यन्ति तु पुनर्महामते अनागतेऽध्वनि ममैव शासने प्रव्रजित्वा शाक्यपुत्रीयत्वं प्रतिजानानाः काषायध्वजधारिणो मोहपुरुषा मिथ्यावितर्कोपहतचेतसो विविधविनयविकल्पवादिनः सत्कायदृष्टियुक्ता रसतृष्णाध्यवसितास्तां तां मांसभक्षण- N 254
हेत्वाभासां ग्रन्थयिष्यन्ति । मम चाभूताभ्याख्यानं दातव्यं मंस्यन्ते । तत्तदर्थोत्पत्तिनिदानं कल्पयित्वा वक्ष्यन्ति—इयमर्थोत्पत्तिरस्मिन्निदाने, भगवता मांसभोजनमनुज्ञातं कल्प्यमिति । प्रणीतभोजनेषु चोक्तम्, स्वयं च किल तथागतेन परिभुक्तमिति । न च महामते कुत्रचित्सूत्रे प्रतिसेवितव्यमित्यनुज्ञातम्, प्रणीतभोजनेषु वा देशितं कल्प्यमिति ॥

यदि तु महामते अनुज्ञातुकामता मे स्यात्, कल्प्यं वा मे श्रावकाणां प्रतिसेवितुं स्यात्, नाहं मैत्रीविहारिणां योगिनां योगाचाराणां श्मशानिकानां महायानसंप्रस्थितानां कुलपुत्राणां कुलदुहितॄणां च सर्वसत्त्वैकपुत्रकसंज्ञाभावनार्थं सर्वमांसभक्षणप्रतिषेधं कुर्याम्, कृतवांश्च । अस्मिन् महामते धर्मकामानां कुलपुत्राणां कुलदुहितॄणां च सर्वयानसंप्रस्थितानां श्मशानिकानां मैत्रीविहारिणामारण्यकानां योगिनां योगाचाराणां सर्वयोगसाधनाय सर्वसत्त्वैकपुत्रकसंज्ञाभावनार्थं सर्वमांसप्रतिषेधम् ॥

तत्र तत्र देशनापाठे शिक्षापदानामनुपूर्वीबन्धं निःश्रेणीपदविन्यासयोगेन त्रिकोटिं N 255
बद्ध्वा न तदुद्दिश्य कृतानि प्रतिषिद्धानि । ततो दशप्रकृतिमृतान्यपि मांसानि प्रतिषिद्धानि । इह तु सूत्रे सर्वेण सर्वं सर्वथा सर्वं निरुपायेन सर्वं प्रतिषिद्धम् । यतोऽहं महामते मांसभोजनं न कस्यचिदनुज्ञातवान्, नानुजानामि, नानुज्ञास्यामि । अकल्प्यं महामते प्रव्रजितानां मांसभोजनमिति वदामि । यदपि च महामते ममाभ्याख्यानं दातव्यं मंस्यन्ते तथागतेनापि परिभुक्तमिति, तदन्येषां महामते मोहपुरुषाणां स्वकर्मदोषावरणावृतानां दीर्घरात्रमनर्थायाहिताय संवर्तकं भविष्यति । न हि महामते आर्यश्रावकाः प्राकृतमनुष्या-

१ T reads प्राणिनः before घातेरन्. २ N suggests किंकरी° for किंकनी; Nepalese Ms. reads किंकिणी°.

हारमाहरन्ति, कुत एव मांसरुधिराहारमकल्प्यम् । धर्माहारा हि महामते मम श्रावकाः प्रत्येकबुद्धा बोधिसत्त्वाश्च नामिषाहाराः, प्रागेव तथागताः । धर्मकाया हि महामते तथागता धर्माहारस्थितयो नामिषकाया न सर्वामिषाहारस्थितयो वान्तसर्वभवोपकरणतृष्णैषणा-
N 256 वासनाः सर्वक्लेशदोषवासनापगताः सुविमुक्तचित्तप्रज्ञाः सर्वज्ञाः सर्वदर्शिनः सर्वसत्त्वैकपुत्रक-समदर्शिनो महाकारुणिकाः । सोऽहं महामते सर्वसत्त्वैकपुत्रकसंज्ञी सन्[1] कथमिव स्वपुत्र-मांसमनुज्ञास्यामि परिभोक्तुं श्रावकेभ्यः, कुत एव स्वयं परिभोक्तुम्? अनुज्ञातवानस्मि श्रावकेभ्यः स्वयं वा परिभुक्तवानिति महामते नेदं स्थानं विद्यते ॥

तत्रेदमुच्यते—

मद्यं मांसं पलाण्डुं न भक्षयेयं महामुने ।
बोधिसत्त्वैर्महासत्त्वैर्भाषद्भिर्जिनपुंगवैः ॥ १ ॥
अनार्यजुष्टदुर्गन्धमकीर्तिकरमेव च ।
क्रव्यादभोजनं मांसं ब्रूह्यभक्ष्यं महामुने ॥ २ ॥
भक्ष्यमाणे च ये दोषा अभक्ष्ये तु गुणाश्च ये ।
महामते निबोध त्वं ये दोषा मांसभक्षणे ॥ ३ ॥
स्वाजन्याद्व्यभिचाराच्च शुक्रशोणितसंभवात् ।
उद्वेजनीयं भूतानां योगी मांसं विवर्जयेत् ॥ ४ ॥
मांसानि च पलाण्डूंश्च मद्यानि विविधानि च ।
गृञ्जनं लशुनं चैव योगी नित्यं विवर्जयेत् ॥ ५ ॥
म्रक्षणं वर्जयेत्तैलं शल्यविद्धेषु न स्वपेत् ।
N 257 छिद्राच्छिद्रेषु सत्त्वानां यच्च स्थानं महद्भयम् ॥ ६ ॥
आहाराज्जायते दर्पः संकल्पो दर्पसंभवः ।
संकल्पजनितो रागस्तस्मादपि न भक्षयेत् ॥ ७ ॥
संकल्पाज्जायते रागश्चित्तं रागेण मुह्यते ।
मूढस्य संगतिर्भवति जायते न च मुच्यते ॥ ८ ॥
लाभार्थं हन्यते सत्त्वो मांसार्थं दीयते धनम् ।
उभौ तौ पापकर्माणौ पच्येते रौरवादिषु ॥ ९ ॥
योऽतिक्रम्य मुनेर्वाक्यं मांसं भक्षति दुर्मतिः ।
लोकद्वयविनाशार्थं दीक्षितः शाक्यशासने ॥ १० ॥
ते यान्ति परमं घोरं नरकं पापकार्मिणः ।
रौरवादिषु रौद्रेषु पच्यन्ते मांसखादकाः ॥ ११ ॥

---

1 N सं for सन्.

त्रिकोटिशुद्धमांसं वै अकल्पितमयाचितम् ।
अचोदितं च नैवास्ति तस्मान्मांसं न भक्षयेत् ॥ १२ ॥
मांसं न भक्षयेद्योगी मया बुद्धैश्च गर्हितम् ।
अन्योन्यभक्षणाः सत्त्वाः क्रव्यादकुलसंभवाः ॥ १३ ॥
दुर्गन्धिः कुत्सनीयश्च उन्मत्तश्चापि जायते ।
चण्डालपुक्कसकुले डोम्बेषु च पुनः पुनः ॥ १४ ॥ N 258
डाकिनीजातियोन्याश्च मांसादे जायते कुले ।
राक्षसीमार्जारयोनौ च जायतेऽसौ नरोऽधमः ॥ १५ ॥
हस्तिकक्ष्ये महामेघे निर्वाणाङ्गुलिमालिके ।
लङ्कावतारसूत्रे च मया मांसं विवर्जितम् ॥ १६ ॥
बुद्धैश्च बोधिसत्त्वैश्च श्रावकैश्च विगर्हितम् ।
खादते यदि नैर्लज्ज्यादुन्मत्तो जायते सदा ॥ १७ ॥
ब्राह्मणेषु च जायेत अथ वा योगिनां कुले ।
प्रज्ञावान् धनवांश्चैव मांसाद्यानां विवर्जनात् ॥ १८ ॥
दृष्टश्रुतविशङ्काभिः सर्वं मांसं विवर्जयेत् ।
तार्किका नावबुध्यन्ते क्रव्यादकुलसंभवाः ॥ १९ ॥
यथैव रागो मोक्षस्य अन्तरायकरो भवेत् ।
तथैव मांसमद्याद्या अन्तरायकरो भवेत् ॥ २० ॥
वक्ष्यन्त्यनागते काले मांसादा मोहवादिनः ।
कल्पिकं निरवद्यं च मांसं बुद्धानुवर्णितम् ॥ २१ ॥
भैषज्यं मांसमाहारं पुत्रमांसोपमं पुनः ।
मात्रया प्रतिकूलं च योगी पिण्डं समाचरेत् ॥ २२ ॥ N 259
मैत्रीविहारिणां नित्यं सर्वथा गर्हितं मया ।
सिंहव्याघ्रवृकाद्यैश्च सह एकत्र संभवेत् ॥ २३ ॥
तस्मान्न भक्षयेन्मांसमुद्वेजनकरं नृणाम् ।
मोक्षधर्मविरुद्धत्वादार्याणामेष वै ध्वजः ॥ २४ ॥

इति लङ्कावतारात्सर्वबुद्धप्रवचनहृदयान्मांसभक्षणपरिवर्तोऽष्टमः ॥



# ९ धारणीपरिवर्तो नाम नवमः ।

N 260 अथ खलु भगवान् महामतिं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म—उद्गृह्ण त्वं महामते लङ्कावतारे मन्त्रपदानि यान्यतीतानागतप्रत्युत्पन्नैर्बुद्धैर्भगवद्भिर्भाषितानि, भाषन्ते, भाषिष्यन्ते च। अहमप्येतर्हि भाषिष्ये धर्मभाणकानां परिग्रहार्थम् । तद्यथा। तुट्टे २ । वुट्टे २ । पट्टे २ । कट्टे २ । अमले २। विमले २ । निमे २। हिमे २। वमे २।कले २ ।कले २ । अट्टे मट्टे । वट्टे तुट्टे । झेट्टे स्पुट्टे । कट्टे २ । लट्टे पट्टे । दिमे २ । चले २ । पचे पचे । बन्धे २ । अञ्चे मञ्चे । दुतारे २ । पतारे २ । अर्के २ । सर्के २ । चक्रे २ । दिमे २ । हिमे २। टु ढु ढु ढु। ४ । डु डु डु डु । ४ । रु रु रु रु । ४ । फु फु फु फु । ४ । स्वाहा ॥

N 261 इमानि महामते मन्त्रपदानि लङ्कावतारे महायानसूत्रे । यः कश्चिन्महामते कुलपुत्रो वा कुलदुहिता वा इमानि मन्त्रपदान्युद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति, न तस्य कश्चिदवतारं लप्स्यते देवो वा देवी वा नागो वा नागी वा यक्षो वा यक्षी वा असुरो वा असुरी वा गरुडो वा गरुडी वा किन्नरो वा किन्नरी वा महोरगो वा महोरगी वा गन्धर्वो वा गन्धर्वी वा भूतो वा भूती वा कुम्भाण्डो वा कुम्भाण्डी वा पिशाचो वा पिशाची वा ओस्तारको वा औस्तारकी वा अपस्मारो वा अपस्मारी वा राक्षसो वा राक्षसी वा डाको वा डाकिनी वा ओजोहारो वा ओजोहारी वा कटपूतनो वा कटपूतनी वा अमनुष्यो वा अमनुष्यी वा, सर्वे तेऽवतारं न लप्स्यते । स चेद्विषमग्रहो भविष्यति, सोऽस्याष्टोत्तरशताभिमन्त्रितेन रोदन् क्रन्दन्तो[१] कं दिशं दृष्ट्वा यास्यति ॥

N 262 पुनरपराणि महामते मन्त्रपदानि भाषिष्ये । तद्यथा—पद्मे पद्मदेवे । हिने हिनि हिने । चु चुले चुलु चुले । फले फुल फुले,। युले घुले युल युले । घुले घुल घुले । पले पल पले । मुञ्चे ३ । छिन्दे भिन्दे भञ्जे मर्दे प्रमर्दे दिनकरे स्वाहा ॥

इमानि महामते मन्त्रपदानि यः कश्चित्कुलपुत्रो वा कुलदुहिता वा उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति, तस्य न कश्चिदवतारं लप्स्यते देवो वा देवी वा नागो वा नागी वा यक्षो वा यक्षी वा असुरो वा असुरी वा गरुडो वा गरुडी वा किन्नरो वा किन्नरी वा महोरगो वा महोरगी वा गन्धर्वो वा गन्धर्वी वा भूतो वा भूती वा कुम्भाण्डो वा कुम्भाण्डी वा पिशाचो वा पिशाची वा ओस्तारको वा ओस्तारकी वा, अपस्मारो वा अपस्मारी वा, राक्षसो वा राक्षसी वा, डाको वा डाकिनी वा, ओजोहरो वा ओजोहरी वा, कटपूतनो वा कटपूतनी वा, मनुष्यो वा मनुष्यी वा, सर्वे तेऽवतारं न लप्स्यते । य इमानि मन्त्रपदानि पठिष्यति, तेन लङ्कावतारसूत्रं पठितं भविष्यति । इमानि भगवता मन्त्रपदानि भाषितानि राक्षसानां निवारणार्थम् ॥

इति लङ्कावतारे धारणीपरिवर्तो नाम नवमः ॥

---

१ N क्रन्दनेकां for क्रन्दन्तो कं which is based Nepalese Ms.

## १० सगाथकम् । N 264

[1]अथ खलु महामतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्–

उत्पादभङ्गरहितो लोकः खेपुष्पसंनिभः ।
सदसन्नोपलब्धोऽयं प्रज्ञया कृपया च ते ॥ १ ॥
शाश्वतोच्छेदवर्ज्यश्च[2] लोकः स्वप्नोपमः सदा ।
सदसन्नोपलब्धोऽयं प्रज्ञया कृपया च ते ॥ २ ॥
मायोपमाः सर्वधर्माश्चित्तविज्ञानवर्जिताः ।
सदसन्नोपलब्धास्ते प्रज्ञया कृपया च ते ॥ ३ ॥
धर्मपुद्गलनैरात्म्यं क्लेशज्ञेयं च ते सदा ।
विशुद्धमनिमित्तेन प्रज्ञया कृपया च ते ॥ ४ ॥
न निर्वासि न निर्वाणे न निर्वाणं त्वयि स्थितम् ।
बुद्धिबोद्धव्यरहितं सदसत्पक्षवर्जितम् ॥ ५ ॥
ये पश्यन्ति मुनिं शान्तमेवमुत्पत्तिवर्जितम् ।
ते भवन्त्यनुपादाना इहामुत्र निरञ्जनाः ॥ ६ ॥ N 265
मृगतृष्णा यथा ग्रीष्मे स्पन्दते चित्तमोहनी ।
मृगा गृह्णन्ति पानीयं वस्तु तस्य न विद्यते ॥ ७ ॥
एवं विज्ञानबीजोऽयं स्पन्दते दृष्टिगोचरे ।
बाला गृह्णन्ति जायन्तं तिमिरं तैमिरा यथा ॥ ८ ॥
ध्याता ध्यानं च ध्येयं च प्रहाणं सत्यदर्शनम् ।
कल्पनामात्रमेवेदं यो बुध्यति स मुच्यति ॥ ९ ॥
असारका इमे धर्मा मन्यनायाः समुत्थिताः ।
साप्यत्र मन्यना शून्या यया शून्येति मन्यते ॥ १० ॥
जलवृक्षच्छायासदृशाः स्कन्ध विज्ञानपञ्चमाः ।
मायास्वप्नोपमं दृश्यं विज्ञप्त्या न विकल्पयेत् ॥ ११ ॥
मायावेतालयन्त्राभं स्वप्नं विद्युद्घनं सदा ।
त्रिसंततिव्यवच्छिन्नं जगत्पश्यन् विमुच्यते ॥ १२ ॥
अयोनिशो विकल्पेन विज्ञानं संप्रवर्तते ।
अष्टधा नवधा चित्रं तरंगाणि महोदधौ ॥ १३ ॥

---

१ Before अथ, all Mss. give the following stanza, which is not a part of the text:

लङ्कावतारसूत्रोक्तं गाथारत्नमयं शृणु ।
महायाननयं चित्रं दृष्टिजालविघातनम् ॥

२ N °वर्जश्च.

वासनैर्बृंहितं नित्यं बुद्ध्या मूलं स्थिराश्रयम्।
N 266 भ्रमते गोचरे चित्तमयस्कान्ते यथायसम्॥ १४॥
आश्रिता सर्वभूतेषु गोत्रभूस्तर्कवर्जिता।
निवर्तते क्रियामुक्ता ज्ञानज्ञेयविवर्जिता॥ १५॥
मायोपमं समाधिं च दशभूमिविनिर्गतम्।
पश्यथ चित्तराजानं संज्ञाविज्ञानवर्जितम्॥ १६॥
परावृत्तं यदा चित्तं तदा तिष्ठति शाश्वतम्।
विमाने पद्मसंकाशे मायागोचरसंभवे॥ १७॥
तस्मिन् प्रतिष्ठितो भवत्यनाभोगचरिं गतः।
करोति सत्त्वकार्याणि विश्वरूपामणिर्यथा॥ १८॥
संस्कृतासंस्कृतं नास्ति अन्यत्र हि विकल्पनात्।
बाला गृह्णन्ति धिङ्मूढा वन्ध्याः स्वप्ने यथा सुतम्॥ १९॥
नैःस्वाभाव्यमनुत्पादो पुद्गलः स्कन्ध संततिः।
प्रत्यया धातवो ज्ञेया शून्यता च भवाभवम्॥ २०॥
उपायदेशना मह्यं नाहं देशेमि लक्षणम्।
बाला गृह्णन्ति भावेन लक्षणं लक्ष्यमेव च॥ २१॥
सर्वस्य वेत्ता न च सर्ववेत्ता
सर्वस्य मध्ये न च सर्वमस्ति।
बाला विकल्पेन्ति बुधश्च लोको
न चापि बुध्यामि न च बोधयामि॥ २२॥
N 267 प्रज्ञप्तिर्नाममात्रेयं लक्षणेन न विद्यते।
स्कन्धाः केशोण्डुकाकारा यत्र बालैर्विकल्प्यते॥ २३॥
नाभूत्वा जायते किंचित्प्रत्ययैर्न विनश्यते।
वन्ध्यासुताकाशपुष्पं यदा पश्यति संस्कृतम्।
तदा ग्राहश्च ग्राह्यं च भ्रान्तिं दृष्ट्वा निवर्तते॥ २४॥
नाहं निर्वामि भावेन क्रियया लक्षणेन च।
विकल्पहेतुविज्ञाननिवृत्तेर्निर्वृतो ह्यहम्।
([1]न विनश्यति लक्षणं यत्र बालैर्विकल्प्यते)॥ २५॥
यथा क्षीणे महत्योघे तरंगाणामसंभवः।
तथा विज्ञानवैचित्र्यं निरुद्धं न प्रवर्तते॥ २६॥

---

[1] N has reconstructed this line from C.

शून्याश्च निःस्वभावाश्च मायोपमा[1] अजातकाः ।
सदसन्तो न विद्यन्ते भावाः स्वप्नोपमा इमे ॥ २७ ॥
स्वभावमेकं देशेमि तर्कविज्ञप्तिवर्जितम् ।
आर्याणां गोचरं दिव्यं स्वभावद्वयवर्जितम् ॥ २८ ॥
खद्योता इव मत्तस्य यथा चित्रा न सन्ति च । N 268
दृश्यन्ते धातुसंक्षोभादेवं लोकः स्वभावतः ॥ २९ ॥
तृणकाष्ठकठल्लेषु यथा माया विराजते ।
न चासौ विद्यते माया एवं धर्माः स्वभावतः ॥ ३० ॥
न ग्राहको न च ग्राह्यं न बन्ध्यो न च बन्धनम् ।
मायामरीचिसदृशं स्वप्नाख्यं तिमिरं यथा ॥ ३१ ॥
यदा पश्यति तत्त्वार्थी निर्विकल्पो निरञ्जनः ।
तदा योगं समापन्नो द्रक्ष्यते मां न संशयः ॥ ३२ ॥
न ह्यत्र काचिद्विज्ञप्तिर्नभे यद्वन्मरीचयः ।
एवं धर्मान् विजानन्तो न किंचित्प्रतिजानति ॥ ३३ ॥
सदसतः प्रत्ययेषु धर्माणां नास्ति संभवः ।
भ्रान्तं त्रैधातुके चित्तं विचित्रं ख्यायते यतः ॥ ३४ ॥

स्वप्नं च लोकं च समस्वभावं
रूपाणि चित्राणि हि तत्र चापि ।
दृश्यन्ति भोगं स्परिशं समानं
देहान्तगं लोकगुरुं क्रियां च ॥ ३५ ॥

चित्तं हि त्रैधातुकयोनिरेत-
द्भ्रान्तं हि चित्तमिहमुत्र दृश्यते ।
न कल्पयेल्लोकमसत्त एषा- N 269
मेतादृशीं लोकगतिं विदित्वा ॥ ३६ ॥

संभवं विभवं चैव मोहात्पश्यन्ति बालिशाः ।
न संभवं न विभवं प्रज्ञायुक्तो विपश्यति ॥ ३७ ॥
अकनिष्ठभवने दिव्ये सर्वपापविवर्जिते ।
निर्विकल्पाः सदा युक्ताश्चित्तचैत्तविवर्जिताः ॥ ३८ ॥
बलाभिज्ञावशिप्राप्ताः तत्समाधिगतिंगताः ।
तत्र बुध्यन्ति संबुद्धा निर्मितस्त्विह बुध्यते ॥ ३९ ॥

---

१ Mss. मायोपमो.

निर्माणकोट्यो ह्यमिता बुद्धानां निश्चरन्ति च।
सर्वत्र बालाः शृण्वन्ति धर्मं तेभ्यः प्रतिश्रुत्वा (?) ॥ ४० ॥
आदिमध्यान्तनिर्मुक्तं भावाभावविवर्जितम्।
व्यापिनमचलं शुद्धमचित्रं चित्रसंभवम् ॥ ४१ ॥
विज्ञप्तिगोत्रसंछन्नमालीनं सर्वदेहिनाम्।
भ्रान्तेश्च विद्यते माया न माया भ्रान्तिकारणम् ॥ ४२ ॥
चित्तस्य मोहेनाप्यस्ति यत्किंचिदपि विद्यते।
स्वभावद्वयनिबद्धमालयविज्ञाननिर्मितम्।
N 270 लोकं विज्ञप्तिमात्रं च दृष्ट्यौघं धर्मपुद्गलम् ॥ ४३ ॥
विभाव्य लोकमेवं तु परावृत्तो यदा भवेत्।
तदा पुत्रो भवेन्मह्यं निष्पन्नधर्मवर्तकः ॥ ४४ ॥
उष्णद्रवचलकठिना धर्मा बालैर्विकल्पिताः।
असद्भूत[1]समारोपो नास्ति लक्ष्यं न लक्षणम् ॥ ४५ ॥
अष्टद्रव्यकमेतत्तु कायसंस्थानमिन्द्रियम्।
रूपं कल्पन्ति वै बाला भ्रान्ताः संसारपञ्जरे ॥ ४६ ॥
हेतुप्रत्यय[2]सामग्र्या बालाः कल्पन्ति संभवम्।
[3]अजानाना नयमिदं भ्रमन्ति त्रिभवालये ॥ ४७ ॥
सर्वभावास्वभावा च वचनमपि नृणाम्।
कल्पनाचापि निर्माणं नास्ति स्वप्नोपमं भवम्।
N 271 * * * * परीक्षेन्न संसरेन्नापि निर्वायात् ॥ ४८ ॥
चित्तं विचित्रं बीजाख्यं ख्यायते चित्तगोचरम्।
ख्यातौ कल्पन्ति उत्पत्तिं बालाः कल्पद्वये रताः ॥ ४९ ॥
अज्ञान तृष्णा कर्मं च चित्तचैत्ता न मारकम्।
प्रवर्तति ततो यस्मात्पारतन्त्र्यं हि तन्मतम्[4] ॥ ५० ॥
ते च कल्पन्ति यद्वस्तु चित्तगोचरविभ्रमम्।
कल्पनायामनिष्पन्नं मिथ्याभ्रान्तिविकल्पितम् ॥ ५१ ॥
चित्तं प्रत्ययसंबद्धं प्रवर्तति शरीरिणाम्।
प्रत्ययेभ्यो विनिर्मुक्तं न पश्यामि वदाम्यहम् ॥ ५२ ॥
प्रत्ययेभ्यो विनिर्मुक्तं स्वलक्षणविवर्जितम्।
न तिष्ठति यदा देहे तेन मह्यमगोचरम् ॥ ५३ ॥

---

१ N °समारोपा for °समारोपो. २ N °सामग्र्यात् for °सामग्र्या. ३ N आजानानान् for अजानाना. ४ N हितं मया for हि तन्मतम् which is based on T.

राजा श्रेष्ठी यथा पुत्रान् विचित्रैर्मृगसादृशैः ।
प्रलोभ्य क्रीडति गृहे वने मृगसमागमम् ॥ ५४ ॥
तथाहं लक्षणैश्चित्रैर्धर्माणां प्रतिबिम्बकैः ।
प्रत्यात्मवेद्यां हि सुतां भूतकोटिं वदाम्यहम् ॥ ५५ ॥
तरंगा ह्युदधेर्यद्वत्पवनप्रत्ययोदिताः ।
नृत्यमानाः प्रवर्तन्ते व्युच्छेदश्च न विद्यते ॥ ५६ ॥
आलयौघस्तथा नित्यं विषयपवनेरितः । N 272
चित्रैस्तरंगविज्ञानैर्नृत्यमानः प्रवर्तते ॥ ५७ ॥
ग्राह्यग्राहकभावेन चित्तं नमति देहिनाम् ।
दृश्यस्य लक्षणं नास्ति यथा बालैर्विकल्प्यते ॥ ५८ ॥
परमालयविज्ञानं विज्ञप्तिरालयं पुनः ।
ग्राह्यग्राहकापगमात्तथतां देशयाम्यहम् ॥ ५९ ॥
नास्ति स्कन्धेष्वात्मा न सत्त्वो न च पुद्गलः ।
उत्पद्यते च विज्ञानं विज्ञानं च निरुध्यते ॥ ६० ॥
निम्नोन्नतं यथा चित्रे दृश्यते न च विद्यते ।
तथा भावेषु भावत्वं दृश्यते न च विद्यते ॥ ६१ ॥
गन्धर्वनगरं यद्वद्यथा च मृगतृष्णिका ।
दृश्यं ख्याति तथा नित्यं प्रज्ञया च न विद्यते ॥ ६२ ॥
प्रमाणेन्द्रियनिर्वृत्तं न कार्यं नापि कारणम् ।
बुद्धिबोद्धव्यरहितं लक्ष्यलक्षणवर्जितम् ॥ ६३ ॥
स्कन्धान् प्रतीत्य संबुद्धो न दृष्टः केनचित्क्वचित् ।
यो न दृष्टः क्वचित्केन कुतस्तस्य विभावना ॥ ६४ ॥
प्रत्ययैर्हेतुदृष्टान्तैः प्रतिज्ञा कारणेन च ।
स्वप्नगन्धर्वचक्रेण मरीच्या सोमभास्करैः ॥ ६५ ॥ N 273
अदृश्यं कुलादिदृष्टान्तैरुत्पत्तिं वादयाम्यहम् ।
स्वप्नविभ्रममायाख्यं शून्यं वै कल्पितं जगत् ॥ ६६ ॥
अनाश्रितश्च त्रैलोक्ये अध्यात्मं च बहिस्तथा ।
अनुत्पन्नं भवं दृष्ट्वा क्षान्त्यनुत्पत्ति जायते ॥ ६७ ॥
मायोपमसमाधिं च कायं मनोमयं पुनः ।
अभिज्ञा वशिता तस्य बला चित्तस्य चित्रिता ॥ ६८ ॥
भावा येषां ह्यनुत्पन्नाः शून्या वै अस्वभावकाः ।
तेषामुत्पद्यते भ्रान्तिः प्रत्ययैश्च निरुध्यते ॥ ६९ ॥

चित्तं हि ख्याति चित्तस्य बहिर्धा ख्याति रूपिणः।
अन्यन्न विद्यते दृश्यं यथा बालैर्विकल्प्यते ॥ ७० ॥
संकला बुद्धबिम्बं च भूतानां च विदारणम्।
अधिष्ठन्ति जगच्चित्रं प्रज्ञप्त्या वै सुशिक्षिताः ॥ ७१ ॥
देहः प्रतिष्ठा भोगश्च ग्राह्यविज्ञप्तयस्त्रयः।
मन उद्ग्रहविज्ञप्तिविकल्पो ग्राहकास्त्रयः ॥ ७२ ॥
N 274 विकल्पश्च विकल्प्यं च यावत्त्वक्षरगोचरम्।
तावत्तत्त्वं न पश्यन्ति तार्किकास्तर्कविभ्रमात् ॥ ७३ ॥
नैःस्वभाव्यं हि भावानां यदा बुध्यन्ति प्रज्ञया।
तदा विश्रमति योगी आनिमित्तप्रतिष्ठितः ॥ ७४ ॥
मसिम्रक्षितको यद्वद्गृह्यते कुर्कुटोऽबुधैः।
स एवायमजानानैर्बालैर्यानत्रयं तथा ॥ ७५ ॥
न ह्यत्र श्रावकाः केचिन्नास्ति प्रत्येकयानिकाः।
यच्चैतद्दृश्यते रूपं श्रावकस्य जिनस्य च।
निर्माणं देशयन्त्येते बोधिसत्त्वाः कृपात्मकाः ॥ ७६ ॥
विज्ञप्तिमात्रं त्रिभवं स्वभावद्वयकल्पितम्।
परावृत्तस्तु तथता धर्मपुद्गलसंचरात् ॥ ७७ ॥
सोमभास्करदीपार्चिर्भूतानि मणयस्तथा।
निर्विकल्पाः प्रवर्तन्ते तथा बुद्धस्य बुद्धता ॥ ७८ ॥
केशोण्डुकं यथा मिथ्या गृह्यते तैमिरैर्जनैः।
तथा भावविकल्पोऽयं मिथ्या बालैर्विकल्प्यते ॥ ७९ ॥
स्थितिभङ्गोत्पत्तिरहिता नित्यानित्यविवर्जिताः।
N 275 संक्लेशव्यवदानाख्या भावाः केशोण्डुकोपमाः ॥ ८० ॥
पुत्तलिकं यथा कश्चित्कनकाभं पश्यते जगत्।
न ह्यस्ति कनकं तत्र भूमिश्च कनकायते ॥ ८१ ॥
एवं हि दूषिता बालाश्चित्तचैत्तैरनादिकैः।
मायामरीचिप्रभवं भावं गृह्णन्ति तत्त्वतः ॥ ८२ ॥
एकबीजमबीजं च समुद्रैकं च बीजकम्।
सर्वबीजकमप्येतच्चित्तं पश्यथ चित्रिकम् ॥ ८३ ॥
एकं बीजं यदा शुद्धं परावृत्तमबीजकम्।
समं हि निर्विकल्पत्वादुद्रेकाज्जन्मसंकरः।
बीजमावहते चित्रं सर्वबीजं तदुच्यते ॥ ८४ ॥

न ह्यत्रोत्पद्यते किंचित्प्रत्ययैर्न निरुध्यते ।
उत्पद्यन्ते निरुध्यन्ते प्रत्यया एव कल्पिताः ॥ ८५ ॥
प्रज्ञप्तिमात्रं त्रिभवं नास्ति वस्तु स्वभावतः ।
प्रज्ञप्तिवस्तुभावेन कल्पयिष्यन्ति तार्किकाः ॥ ८६ ॥
भावस्वभावजिज्ञासा न हि भ्रान्तिर्निवार्यते ।
भावस्वभावानुत्पत्तिरेवं दृष्ट्वा विमुच्यते ॥ ८७ ॥
न माया नास्तिसाधर्म्याद्भावानां कथ्यतेऽस्तिता । N 276
वितथाशुविद्युत्सदृशास्तेन मायोपमाः स्मृताः ॥ ८८ ॥
न चोत्पद्या न चोत्पन्नाः प्रत्ययोऽपि न केचन ।
संविद्यन्ते क्वचित्तेन व्यवहारं तु कथ्यते ॥ ८९ ॥
न भङ्गोत्पादसंक्लेशः प्रत्ययानां निवार्यते ।
यत्तु बाला विकल्पेन्ति प्रत्ययैः संनिवार्यते ॥ ९० ॥
न स्वभावो न विज्ञप्तिर्न वस्तु न च आलयः ।
बालैर्विकल्पिता ह्येते शवभूतैः कुतार्किकैः ॥ ९१ ॥
चित्तमात्रं यदा लोकं प्रपश्यन्ति जिनात्मजाः ।
तदा नैर्वाणिकं कायं क्रियासंस्कारवर्जितम् ।
लभन्ते ते बलाभिज्ञावशितैः सह संयुतम् ॥ ९२ ॥
सर्वरूपावभासं हि यदा चित्तं प्रवर्तते ।
नात्र चित्तं न रूपाणि भ्रान्तं चित्तमनादिकम् ॥ ९३ ॥
तदा योगी ह्यनाभासं प्रज्ञया पश्यते जगत् ।
निमित्तं वस्तुविज्ञप्तिर्मनोविस्पन्दितं च यत् ।
अतिक्रम्य तु पुत्रा मे निर्विकल्पाश्चरन्ति ते ॥ ९४ ॥ N 277
गन्धर्वनगरं माया केशोण्डुक मरीचिका ।
असत्याः सत्यतः ख्यान्ति तथा भावेषु भावना ॥ ९५ ॥
अनुत्पन्नाः सर्वभावा भ्रान्तिमात्रं हि दृश्यते ।
भ्रान्तिं कल्पेन्ति उत्पन्नां बालाः कल्पद्वये रताः ॥ ९६ ॥
औपपत्त्यङ्गिकं चित्तं विचित्रं वासनासंभवम् ।
प्रवर्तते तरंगौघं तच्छेदान्न प्रवर्तते ॥ ९७ ॥
विचित्रालम्बनं चित्रं यथा चित्ते प्रवर्तते ।
तथाकाशे च कुड्ये च कस्मान्नाभिप्रवर्तते ॥ ९८ ॥
निमित्तं किंचिदालम्ब्य यदि चित्तं प्रवर्तते ।
प्रत्ययैर्जनितं चित्तं चित्तमात्रं न युज्यते ॥ ९९ ॥

चित्तेन गृह्यते चित्तं नास्ति किंचित्सहेतुकम्।
चित्तस्य धर्मता शुद्धा गगने नास्ति वासना॥ १०० ॥
स्वचित्ताभिनिवेशेन चित्तं वै संप्रवर्तते।
बहिर्धा नास्ति वै दृश्यमतो वै चित्तमात्रकम्॥ १०१ ॥
N 278 चित्तमालयविज्ञानं मनो यन्मन्यनात्मकम्।
गृह्णाति विषयान् येन विज्ञानं हि तदुच्यते॥ १०२ ॥
चित्तमव्याकृतं नित्यं मनो ह्युभयसंचरम्।
वर्तमानं हि विज्ञानं कुशलाकुशलं हि तत्॥ १०३ ॥
द्वारं हि परमार्थस्य विज्ञप्तिद्वयवर्जितम्।
यानत्रयव्यवस्थानं निराभासे स्थितं कुतः॥ १०४ ॥
चित्तमात्रं निराभासं विहारा बुद्धभूमिश्च।
एतद्धि भाषितं बुद्धैर्भाषन्ते भाषयन्ति च॥ १०५ ॥
चित्तं हि भूमयः सप्त निराभासा च अष्टमी।
द्वे भूमयो विहारश्च शेषा भूमिर्ममात्मिका॥ १०६ ॥
प्रत्यात्मवेद्या शुद्धा च भूमिश्चापि ममात्मिका।
माहेश्वरपरस्थानमकनिष्ठे विराजते॥ १०७ ॥
हुताशनस्यैव यथा निश्चेरुस्तस्य रश्मयः।
चित्रा मनोहराः सौम्यास्त्रिभवं निर्मिणन्ति ये॥ १०८ ॥
N 279 निर्माय त्रिभवं किंचित्किंचिद्वै पूर्वनिर्मितम्।
तत्र देशन्ति यानानि एषा भूमिर्ममात्मिका॥ १०९ ॥
नास्ति कालो ह्यधिगमे भूमीनां क्षेत्रसंक्रमे।
चित्तमात्रमतिक्रम्य निराभासे स्थितं फलम्॥ ११० ॥
असत्ता चैव सत्ता च दृश्यते च विचित्रता।
बाला ग्राहविपर्यस्ता [1]विपर्यासो हि चित्रता॥ १११ ॥
निर्विकल्पं यदि ज्ञानं वस्त्वस्तीति न युज्यते।
यस्माच्चित्तं न रूपाणि निर्विकल्पं हि तेन तत्॥ ११२ ॥
इन्द्रियाणि च मायाख्या विषयाः स्वप्नसंनिभाः।
कर्ता कर्म क्रिया चैव सर्वथापि न विद्यते॥ ११३ ॥
ध्यानानि चाप्रमाणानि आरूप्याश्च समाधयः।
संज्ञानिरोधो निखिलश्चित्तमात्रे न विद्यते॥ ११४ ॥

---

1 N विपर्यासं विचित्रतः; our reading is based on T.

स्रोतापत्तिफलं चैव सकृदागामिफलं तथा ।
अनागामिफलं चैव अर्हत्त्वं चित्तविभ्रमः ॥ ११५ ॥
शून्यमनित्यं क्षणिकं बालाः कल्पन्ति संस्कृतम् ।
नदीदीपादिदृष्टान्तैः क्षणिकार्थो विकल्प्यते ॥ ११६ ॥ N 280
निर्व्यापारं तु क्षणिकं विविक्तं क्रियवर्जितम् ।
अनुत्पत्तिं च धर्माणां क्षणिकार्थं वदाम्यहम् ॥ ११७ ॥
सच्चासतो ह्यनुत्पादः सांख्यवैशेषिकैः स्मृतः ।
अव्याकृतानि सर्वाणि तैरेव हि प्रकाशितम् ॥ ११८ ॥
चतुर्विधं व्याकरणमेकांशपरिपृच्छनम् ।
विभज्यस्थापनीयं च तीर्थवादनिवारणम् ॥ ११९ ॥
सर्वं विद्यति संवृत्यां परमार्थे न विद्यते ।
धर्माणां निःस्वभावत्वं परमार्थेऽपि दृश्यते ।
उपलब्धिनिःस्वभावे संवृतिस्तेन उच्यते ॥ १२० ॥
अभिलापहेतुको भावः स्वभावो यदि विद्यते ।
अभिलापसंभवो भावो नास्तीति च न विद्यते ॥ १२१ ॥
निर्वस्तुको ह्यभिलापस्तत्संवृत्यापि न विद्यते ।
विपर्यासस्य वस्तुत्वाच्चोपलब्धिर्न विद्यते ॥ १२२ ॥
विद्यते चेद्विपर्यासो नैःस्वाभाव्यं न विद्यते ।
विपर्यासस्य वस्तुत्वाद्यद्यदेवोपलभ्यते । N 281
निःस्वभावं भवेत्तद्धि सर्वथापि न विद्यते ॥ १२३ ॥
यदेतद्दृश्यते चित्रं चित्तं दौष्ठुल्यवासितम् ।
रूपावभासग्रहणं बहिर्धा चित्तविभ्रमम् ॥ १२४ ॥
विकल्पेनाविकल्पेन विकल्पो हि प्रहीयते ।
विकल्पेनाविकल्पेन शून्यतातत्त्वदर्शनम् ॥ १२५ ॥
मायाहस्ती यथा चित्रं पत्राणि कनका यथा ।
तथा दृश्यं नृणां ख्याति चित्ते अज्ञानवासिते ॥ १२६ ॥
आर्यो न पश्यते भ्रान्तिं नापि तत्त्वं तदन्तरे ।
भ्रान्तिरेव भवेत्तत्त्वं यस्मात्तत्त्वं तदन्तरे ॥ १२७ ॥
भ्रान्तिं विधूय सर्वां तु निमित्तं यदि जायते ।
सैव चास्य भवेद्भ्रान्तिरशुद्धं तिमिरं यथा ॥ १२८ ॥
केशोण्डुकं तैमिरिको यथा गृह्णाति विभ्रमात् ।
विषयेषु तद्वद्बालानां ग्रहणं संप्रवर्तते ॥ १२९ ॥

केशोण्डुकप्रख्यमिदं मरीच्युदकविभ्रमम् ।
त्रिभवं स्वप्नमायाभं विभावेन्तो[1] विमुच्यते ॥ १३० ॥
N 282 विकल्पश्च विकल्प्यश्च विकल्पस्य प्रवर्तते ।
बन्धो[2] बन्ध्यश्च बद्धश्च षडेते मोक्षहेतवः ॥ १३१ ॥
न भूमयो न सत्यानि न क्षेत्रा न च निर्मिताः ।
बुद्धाः प्रत्येकबुद्धाश्च श्रावकाश्चापि कल्पिताः ॥ १३२ ॥
पुद्गलः संततिः स्कन्धाः प्रत्यया ह्यणवस्तथा ।
प्रधानमीश्वरः कर्ता चित्तमात्रे विकल्प्यते ॥ १३३ ॥
चित्तं हि सर्वं सर्वत्र सर्वदेहेषु वर्तते ।
विचित्रं गृह्यतेऽसद्भिश्चित्तमात्रं ह्यलक्षणम् ॥ १३४ ॥
न ह्यात्मा विद्यते स्कन्धे स्कन्धाश्चैव हि नात्मनि ।
न ते यथा विकल्प्यन्ते न च ते वै न सन्ति च ॥ १३५ ॥
अस्तित्वं सर्वभावानां यथा बालैर्विकल्प्यते ।
यदि ते भवेद्यथादृष्टाः सर्वे स्युस्तत्त्वदर्शिनः ॥ १३६ ॥
अभावात्सर्वधर्माणां संक्लेशो नास्ति शुद्धि च ।
न च ते तथा यथादृष्टा न च ते वै न सन्ति च ॥ १३७ ॥
भ्रान्तिर्निमित्तं संकल्पः परतन्त्रस्य लक्षणम् ।
N 283 तस्मिन्निमित्ते यन्नाम तद्विकल्पितलक्षणम् ॥ १३८ ॥
नामनिमित्तसंकल्पो यदा तस्य न जायते ।
प्रत्ययावस्तुसंकेतं परिनिष्पन्नलक्षणम् ॥ १३९ ॥
वैपाकिकाश्च ये बुद्धा जिना नैर्माणिकाश्च ये ।
सत्त्वाश्च बोधिसत्त्वाश्च क्षेत्राणि च दिशे दिशे ॥ १४० ॥
निस्यन्दधर्मनिर्माणा जिना नैर्माणिकाश्च ये ।
सर्वे ते ह्यमिताभस्य सुखावत्या विनिर्गताः ॥ १४१ ॥
यच्च नैर्माणिकैर्भाष्टं यच्च भाष्टं विपाकजैः ।
सूत्रान्तवैपुल्यनयं तस्य संधिं विजानथ ॥ १४२ ॥
यद्भाषितं जिनसुतैर्यच्च भाषन्ति नायकाः ।
यद्धि नैर्माणिकाभाष्टं न तु वैपाकिकैर्जिनैः ॥ १४३ ॥
अनुत्पन्ना ह्यमी धर्मा न चैवैते न सन्ति च ।
गन्धर्वनगरस्वप्नमायानिर्माणसादृशाः ॥ १४४ ॥

---

१ N विभावत्वाद्विमुच्यते; our reading is based on T. २ N बन्धवद्बन्धुहेतुश्च; our reading is based on T.

चित्तं प्रवर्तते चित्तं चित्तमेव विमुच्यते ।
चित्तं हि जायते नान्यच्चित्तमेव निरुध्यते ॥ १४५ ॥
अर्थाभासं[1] नृणां चित्तं चित्तं वै ख्याति कल्पितम् ।
नास्त्यर्थश्चित्तमात्रेयं निर्विकल्पो विमुच्यते ॥ १४६ ॥ N 284
अनादिकालप्रपञ्चदौष्ठुल्यं हि समाहितम् ।
विकल्पो भावितस्तेन मिथ्याभासं प्रवर्तते ॥ १४७ ॥
अर्थाभासे च विज्ञाने ज्ञानं तथतागोचरम् ।
परावृत्तं निराभासमार्याणां गोचरे ह्यसौ ॥ १४८ ॥
अर्थप्रविचयं ध्यानं ध्यानं बालोपचारिकम् ।
तथतारम्बणं ध्यानं ध्यानं ताथागतं शुभम् ॥ १४९ ॥
परिकल्पितं स्वभावेन सर्वधर्मा अजानकाः ।
परतन्त्रं समाश्रित्य विकल्पो भ्रमते नृणाम् ॥ १५० ॥
परतन्त्रं यथा शुद्धं विकल्पेन विसंयुतम् ।
परावृत्तं हि तथता विहारः कल्पवर्जितः ॥ १५१ ॥
मा विकल्पं विकल्पेथ विकल्पो नास्ति सत्यतः ।
भ्रान्तिं विकल्पयन्तस्य ग्राह्यग्राहकयोर्न तु ।
बाह्यार्थदर्शनं कल्पं स्वभावः परिकल्पितः ॥ १५२ ॥
येन कल्पेन कल्पेन्ति स्वभावः प्रत्ययोद्भवः । N 285
बाह्यार्थदर्शनं मिथ्या नास्त्यर्थं चित्तमेव तु ॥ १५३ ॥
युक्त्या विपश्यमानानां ग्राहग्राह्यं निरुध्यते ।
बाह्यो न विद्यते ह्यर्थो यथा बालैर्विकल्प्यते ॥ १५४ ॥
वासनैर्लुलितं चित्तमर्थाभासं प्रवर्तते ।
कल्पद्वयनिरोधेन ज्ञानं तथतगोचरम् ॥ १५५ ॥
उत्पद्यते ह्यनाभासमचिन्त्यमार्यगोचरम् ।
नामनिमित्तसंकल्पः स्वभावद्वयलक्षणम् ।
सम्यग्ज्ञानं हि तथता परिनिष्पन्नलक्षणम् ॥ १५६ ॥
मातापितृसमायोगादालयमनसंयुतम् ।
घृतकुम्भे मूषिका यद्वत्सह शुक्रेण वर्धते ॥ १५७ ॥
पेशीघनार्बुदं पिटकमशुभं कर्मचित्रितम् ।
कर्मवायुमहाभूतैः फलवत्संप्रपद्यते ॥ १५८ ॥

---

1 N अर्थाभाषं.

पञ्चपञ्चकपञ्चैव व्रणाश्चैव नवैव तु।
N 286 नखदन्तरोमसंछन्नः स्फुरमाणः प्रजायते ॥ १५९ ॥
प्रजातमात्रं विष्ठाक्रमिं सुप्तबुद्धेव मानवः।
चक्षुषा स्फुरते रूपं विवृद्धिं याति कल्पनात् ॥ १६० ॥
ताल्वोष्ठपुटसंयोगाद्विकल्पेनावधार्यते।
वाचा प्रवर्तते नृणां शुकस्येव विकल्पना ॥ १६१ ॥
निश्चितास्तीर्थ्यवादानां महायानमनिश्चितम्।
सत्त्वाश्रयप्रवृत्तोऽयं कुदृष्टीनामनास्पदम् ॥ १६२ ॥
प्रत्यात्मवेद्ययानं मे तार्किकाणामगोचरम्।
पश्चात्काले गते नाथे ब्रूहि कोऽयं धरिष्यति ॥ १६३ ॥
निर्वृते सुगते पश्चात्कालोऽतीतो भविष्यति।
महामते निबोध त्वं यो नेत्रीं धारयिष्यति ॥ १६४ ॥
दक्षिणापथवेदल्यां भिक्षुः श्रीमान् महायशाः।
नागाह्वयः स नाम्ना तु सदसत्पक्षदारकः ॥ १६५ ॥
प्रकाश्य लोके मद्यानं महायानमनुत्तरम्।
आसाद्य भूमिं मुदितां यास्यतेऽसौ सुखावतीम् ॥ १६६ ॥
N 287 बुद्ध्या विवेच्यमानानां स्वभावो नावधार्यते।
यस्मात्तदनभिलाप्यास्ते निःस्वभावाश्च देशिताः ॥ १६७ ॥
प्रत्ययोत्पादिते ह्यर्थे नास्त्यस्तीति न विद्यते।
प्रत्ययान्तर्गतं भावं ये कल्पेन्त्यस्ति नास्ति च।
दूरीभूता भवेन्मन्ये शासनात्तीर्थदृष्टयः ॥ १६८ ॥
अभिधानं सर्वभावानां जन्मान्तरशतैः सदा।
अभ्यस्तमभ्यसन्तं च परस्परविकल्पया ॥ १६९ ॥
अकथ्यमाने संमोहं सर्वलोक आपद्यते।
तस्मात्क्रियते नाम संमोहस्य व्युदासार्थम् ॥ १७० ॥
त्रिविधेन विकल्पेन बालैर्भावा विकल्पिताः।
भ्रान्तिर्नामविकल्पेन प्रत्ययैर्जनितेन च ॥ १७१ ॥
अनिरुद्धा ह्यनुत्पन्नाः प्रकृत्या गगनोपमाः।
अभावस्वभावा ये तु ते विकल्पितलक्षणाः ॥ १७२ ॥
प्रतिभासबिम्बमायाभमरीच्या सुपिनेन तु।
अलातचक्रगन्धर्वप्रतिश्रुत्कासमोद्भवाः ॥ १७३ ॥

अद्वया तथता शून्या भूतकोटिश्च धर्मता । N 288
निर्विकल्पश्च देशेमि ये ते निष्पन्नलक्षणाः ॥ १७४ ॥
वाक्चित्तगोचरं मिथ्या सत्यं प्रज्ञा विकल्पिता ।
द्वयान्तपतितं चित्तं तस्मात्प्रज्ञा न कल्पिता ॥ १७५ ॥
अस्ति नास्ति च द्वावन्तौ यावच्चित्तस्य गोचरः ।
गोचरेण विधूतेन सम्यक्चित्तं निरुध्यते ॥ १७६ ॥
विषयग्रहणाभावान्निरोधेन च नास्ति च ।
विद्यते तथतावस्था आर्याणां गोचरो यथा ॥ १७७ ॥
बालानां न तथा ख्याति यथा ख्याति मनीषिणाम् ।
मनीषिणां तथा ख्याति सर्वधर्मा अलक्षणाः ॥ १७८ ॥
हारकूटं यथा बालैः सुवर्णं परिकल्प्यते ।
असुवर्णं सुवर्णाभं तथा धर्माः कुतार्किकैः ॥ १७९ ॥
अभूत्वा यस्य चोत्पादो भूत्वा चापि विनश्यति ।
प्रत्ययैः सदसच्चापि न ते मे शासने स्थिताः ॥ १८० ॥
अनाद्यनिधनाभावाद्भूतलक्षणसंस्थिताः ।
कारणकरवल्लोके न च बुध्यन्ति तार्किकाः ॥ १८१ ॥ N 289
अतीतो विद्यते भावो विद्यते च अनागतः ।
प्रत्यक्षो विद्यते यस्मात्तस्माद्भावा अजातकाः ॥ १८२ ॥
परिणामकालसंस्थानं भूतभावेन्द्रियेषु च ।
अन्तराभवसंग्राहं ये कल्पन्ति न ते बुधाः ॥ १८३ ॥
न प्रतीत्यसमुत्पन्नं लोकं वर्णन्ति वै जिनाः ।
किं तु प्रत्ययमेवायं लोको गन्धर्वसंनिभः ॥ १८४ ॥
धर्मसंकेत एवायं तस्मिंस्तदिदमुच्यते ।
संकेताच्च पृथग्भूतो न जातो न निरुध्यते ॥ १८५ ॥
दर्पणे उदके नेत्रे भाण्डेषु च मणीषु च ।
बिम्बं हि दृश्यते तेषु न च बिम्बोऽस्ति कुत्रचित् ॥ १८६ ॥
भावाभासं तथा चित्तं मृगतृष्णा यथा नभे ।
दृश्यते चित्ररूपेण स्वप्ने वन्ध्यौरसो यथा ॥ १८७ ॥
न मे यानं महायानं न घोषो न च अक्षराः ।
न सत्या न विमोक्षा वै न निराभासगोचरम् ॥ १८८ ॥
किं तु यानं महायानं समाधिवशवर्तिता । N 29
कायं मनोमयं चित्रं वशितापुष्पमण्डितम् ॥ १८९ ॥

एकत्वेन पृथक्त्वेन भावो वै प्रत्यये न तु।
जन्म समासमेवोक्तं निरोधो नाश एव हि ॥ १९० ॥
अजातशून्यता चैकमेकं जातेषु शून्यता।
अजातशून्यता श्रेष्ठा नश्यते जातशून्यता ॥ १९१ ॥
तथता शून्यता कोटी निर्वाणं धर्मधातुवत्।
कायो मनोमयं चित्रं पर्यायैर्देशितं मया ॥ १९२ ॥
सूत्रविनयाभिधर्मेण विशुद्धिं कल्पयन्ति ये।
ग्रन्थतो न तु अर्थेन न ते नैरात्म्यमाश्रिताः ॥ १९३ ॥
न तीर्थिकैर्न बुद्धैश्च न मया न च केनचित्।
प्रत्ययैः साधिता[1]स्तित्वं कथं नास्तिर्भविष्यति ॥ १९४ ॥
केन प्रसाधितास्तित्वं प्रत्ययैर्यस्य नास्तिता।
उत्पादवादद्दुर्दृष्ट्या नास्त्यस्तीति विकल्पयेत् ॥ १९५ ॥
यस्य नोत्पद्यते किंचिन्न किंचित्तं निरुध्यते।
तस्यास्तिनास्ति नोपैति विविक्तं पश्यतो जगत् ॥ १९६ ॥
N 291 दृश्यते शशविषाणाख्यं विकल्पो विद्यते नृणाम्।
ये तु कल्पेन्ति ते भ्रान्ता मृगतृष्णां यथा मृगाः ॥ १९७ ॥
विकल्पाभिनिवेशेन विकल्पः संप्रवर्तते।
निर्हेतुकं विकल्पं हि विकल्पोऽपि न युज्यते ॥ १९८ ॥
अजले च जलग्राहो मृगतृष्णा यथा नभे।
दृश्यतेऽर्थो हि बालानामार्याणां न विशेषतः ॥ १९९ ॥
आर्याणां दर्शनं शुद्धं विमोक्षत्रयसंभवम्।
उत्पादभङ्गनिर्मुक्तं निराभासप्रचारिणम् ॥ २०० ॥
गाम्भीर्यौदार्यवैपुल्यं ज्ञानं क्षेत्रान् विभूति च।
देशेमि जिनपुत्राणां श्रावकाणामनित्यताम् ॥ २०१ ॥
अनित्यं त्रिभवं शून्यमात्मात्मीयविवर्जितम्।
श्रावकाणां च देशेमि तथा सामान्यलक्षणम् ॥ २०२ ॥
सर्वधर्मेष्वसंसक्तिर्विवेका ह्येकचारिका।
प्रत्येकजिनपुत्राणां फलं देशेम्यतर्किकम् ॥ २०३ ॥
स्वभावकल्पितं बाह्यं परतन्त्रं च देहिनाम्।
अपश्यन्नात्मसंभ्रान्तिं ततश्चित्तं प्रवर्तते ॥ २०४ ॥

---

[1] N साधिका; our reading is based on T.

दशमी तु भवेत्प्रथमी प्रथमी चाष्टमी भवेत् ।
नवमी सप्तमी चापि सप्तमी चाष्टमी भवेत् ॥ २०५ ॥ N 292
द्वितीया तु तृतीया स्याच्चतुर्थी पञ्चमी भवेत् ।
तृतीया तु भवेत्षष्ठी निराभासे क्रमः कुतः ॥ २०६ ॥
निराभासो हि भावानामभावो नास्ति योगिनाम् ।
भावाभावसमत्वेन आर्याणां जायते फलम् ॥ २०७ ॥
कथं ह्यभावो भावानां कुरुते समतां कथम् ।
यदा चित्तं न जानाति बाह्यमध्यात्मिकं चलम् ।
तदा तु कुरुते नाशं समताचित्तदर्शनात् ॥ २०८ ॥
अनादिमति संसारे भावग्राहोपगूहितम् ।
बालैः कील यथा कीलं प्रलोभ्य त्रिनिवर्तते ॥ २०९ ॥
तद्धेतुकं तदालम्ब्यं मनोगतिसमाश्रयम् ।
हेतुं ददाति चित्तस्य विज्ञानं च समाश्रितम् ॥ २१० ॥
वैपाकिकादधिष्ठानां निकायगतिसंभवात् ।
लभ्यन्ते येन वै स्वप्ने अभिज्ञाश्च चतुर्विधाः ॥ २११ ॥
स्वप्ने च लभ्यते यच्च यच्च बुद्धप्रसादतः ।
निकायगतिगोत्रा ये ते विज्ञानविपाकजाः ॥ २१२ ॥
वासनैर्भावितं चित्तं भावाभासं प्रवर्तते । N 293
बाला यदा न बुध्यन्ते उत्पादं देशयेत्तदा ॥ २१३ ॥
यावद्बाह्यं विकल्पेन्ति भावं वै लक्षणान्वितम् ।
तावद्विबुध्यते चित्तमपश्यन् हि स्वविभ्रमम् ॥ २१४ ॥
उत्पादो वर्ण्यते कस्मात्कस्माद्दृश्यं न वर्ण्यते ।
अदृश्यं दृश्यमानं हि कस्य किं वर्ण्यते कुतः ॥ २१५ ॥
स्वच्छं चित्तं स्वभावेन मनः कलुषकारकम् ।
मनश्च सहविज्ञानैर्वासनां क्षिपते सदा ॥ २१६ ॥
आलयो मुञ्चते कायं मनः प्रार्थयते गतिम् ।
विज्ञानं विषयाभासं भ्रान्तिं दृष्ट्वा प्रलभ्यते ॥ २१७ ॥
मदीयं दृश्यते चित्तं बाह्यमर्थं न विद्यते ।
एवं विभावयेद्भ्रान्तिं तथतां चाप्यनुस्मरेत् ॥ २१८ ॥
ध्यायिनां विषयः कर्म बुद्धमाहात्म्यमेव च ।
एतानि त्रीण्यचिन्त्यानि अचिन्त्यं विज्ञानगोचरम् ॥ २१९ ॥

N 294 अनागतमतीतं च निर्वाणं पुद्गलं वचः।
संवृत्या देशयाम्येतान् परमार्थस्त्वनक्षरः॥ २२०॥
नैकायिकाश्च तीर्थ्याश्च दृष्टिमेकांशमाश्रिताः।
चित्तमात्रे विसंमूढा भावं कल्पेन्ति बाहिरम्॥ २२१॥
प्रत्येकबोधिं बुद्धत्वमर्हत्त्वं बुद्धदर्शनम्।
गूढबीजं भवेद्बोधौ स्वप्ने वै सिध्यते तु यः॥ २२२॥
कुत्र केषां कथं कस्मात्किमर्थं च वदाहि मे।
मायाचित्तमतिशान्तं सदसत्पक्षदेशनाम्॥ २२३॥
चित्तमात्रे विमूढानां मायानास्त्यस्तिदेशनाम्।
उत्पादभङ्गसंयुक्तं लक्ष्यलक्षणवर्जितम्॥ २२४॥
विकल्पो *मनो नाम विज्ञानैः पञ्चभिः सह।
बिम्बौघजलतुल्यादौ चित्तबीजं प्रवर्तते॥ २२५॥
यदा चित्तं मनश्चापि विज्ञानं न प्रवर्तते।
N 295 तदा मनोमयं कायं लभते बुद्धभूमि च॥ २२६॥
प्रत्यया धातवः स्कन्धा धर्माणां च स्वलक्षणम्।
प्रज्ञप्तिं पुद्गलं चित्तं स्वप्नकेशोण्डुकोपमाः॥ २२७॥
मायास्वप्नोपमं लोकं दृष्ट्वा तत्त्वं समाश्रयेत्।
तत्त्वं हि लक्षणैर्मुक्तं युक्तिहेतुविवर्जितम्॥ २२८॥
प्रत्यात्मवेद्यमार्याणां विहारं तु स्मरेत्सदा।
युक्तिहेतुविसंमूढं लोकं तत्त्वे निवेशयेत्॥ २२९॥
सर्वप्रपञ्चोपशमाद्भ्रान्तो नाभिप्रवर्तते।
प्रज्ञा यावद्विकल्पन्ते भ्रान्तिस्तावत्प्रवर्तते॥ २३०॥
नैःस्वभाव्यं च भावं च शून्या वै नित्यानित्यता।
उत्पादवादिनां दृष्टिर्न त्वनुत्पादवादिनाम्॥ २३१॥
एकत्वमन्यत्वोभयामीश्वराच्च यदृच्छया।
कालाप्रधानादन्येभिः प्रत्ययैः कल्प्यते जगत्॥ २३२॥
संसारबीजं विज्ञानं सति दृश्ये प्रवर्तते।
कुड्ये सति यथा चित्रं परिज्ञानान्निरुध्यते॥ २३३॥
N 296 मायापुरुषवन्नॄणां मृतजन्म प्रवर्तते।
मोहात्तथैव बालानां बन्धमोक्षं प्रवर्तते॥ २३४॥
अध्यात्मबाह्यं द्विविधं धर्माश्च प्रत्ययानि च।
एतद्विभावयन् योगी निराभासे प्रतिष्ठते॥ २३५॥

न वासनैर्भिद्यते चित्तं न चित्तं वासनैः सह।
अभिन्नलक्षणं चित्तं वासनैः परिवेष्टितम्॥ २३६॥

मलवद्वासना यस्य मनोविज्ञानसंभवा।
पटशुक्लोपमं चित्तं वासनैर्न विराजते॥ २३७॥

यथा न भावो नाभावो गगनं कथ्यते मया।
आलयं हि तथा काये भावाभावविवर्जितम्॥ २३८॥

मनोविज्ञानव्यावृत्तं चित्तं कालुष्यवर्जितम्।
सर्वधर्मावबोधेन चित्तं बुद्धं वदाम्यहम्॥ २३९॥

त्रिसंततिव्यवच्छिन्नं सत्तासत्ताविवर्जितम्।
चातुष्कोटिकया मुक्तं भवं मायोपमं सदा॥ २४०॥

द्वे स्वभावो भवेत्सप्त भूमयश्चित्तसंभवाः।
शेषा भवेयुर्निष्पन्ना भूमयो बुद्धभूमि च॥ २४१॥

रूपी चारूप्यधातुश्च कामधातुश्च निर्वृतिः। N 297
अस्मिन् कलेवरे सर्वं कथितं चित्तगोचरम्॥ २४२॥

उपलभ्यते यदा यावद्भ्रान्तिस्तावत्प्रवर्तते।
भ्रान्तिः स्वचित्तसंबोधान्न प्रवर्तते न निवर्तते॥ २४३॥

अनुत्पादे कारणाभावो भावे संसारसंग्रहः।
मायादिसदृशं पश्यन् लक्षणं न विकल्पयेत्॥ २४४॥

त्रियानमेकयानं च अयानं च वदाम्यहम्।
बालानां मन्दबुद्धीनामार्याणां च विविक्तताम्॥ २४५॥

उत्पत्तिर्द्विविधा मह्यं लक्षणाधिगमौ च या।
चतुर्विधो नयविधिः सिद्धान्तं युक्तिदेशना॥ २४६॥

संस्थानाकृतिविशेषैर्भ्रान्तिं दृष्ट्वा विकल्प्यते।
नामसंस्थानविरहात्स्वभावमार्यगोचरम्॥ २४७॥

विकल्पेन कल्प्यते यावत्तावत्कल्पितलक्षणम्।
विकल्पकल्पनाभावात्स्वभावमार्यगोचरम्॥ २४८॥

नित्यं च शाश्वतं तत्त्वं गोत्रं वस्तुस्वभावकम्।
तथता चित्तनिर्मुक्तं कल्पनैश्च विवर्जितम्॥ २४९॥ N 298

यद्यद्वस्तु न शुद्धिः स्यात्संक्लेशो नापि कस्यचित्।
यस्माच्च शुध्यते चित्तं संक्लेशश्चापि दृश्यते।
तस्मात्तत्त्वं भवेद्वस्तु विशुद्धमार्यगोचरम्॥ २५०॥

प्रत्ययैर्जनितं लोकं विकल्पैश्च विवर्जितम्।
मायादिस्वप्नसदृशं विपश्यन्तो विमुच्यते ॥ २५१ ॥
दौष्ठुल्यवासनाश्चित्राश्चित्तेन सह संयुताः।
बहिर्धा दृश्यते नृणां न हि चित्तस्य धर्मता ॥ २५२ ॥
चित्तस्य धर्मता शुद्धा न चित्तं भ्रान्तिसंभवम्।
भ्रान्तिश्च दौष्ठुल्यमयी तेन चित्तं न दृश्यते ॥ २५३ ॥
भ्रान्तिमात्रं भवेत्तत्त्वं तत्त्वं नान्यत्र विद्यते।
न संस्कारे न चान्यत्र किं तु संस्कारदर्शनात् ॥ २५४ ॥
लक्ष्यलक्षणनिर्मुक्तं यदा पश्यति संस्कृतम्।
विधूतं हि भवेत्तेन स्वचित्तं पश्यतो जगत् ॥ २५५ ॥
चित्तमात्रं समारुह्य बाह्यमर्थं न कल्पयेत्।
तथतालम्बने स्थित्वा चित्तमात्रमतिक्रमेत् ॥ २५६ ॥
चित्तमात्रमतिक्रम्य निराभासमतिक्रमेत्।
N 299 निराभासस्थितो योगी महायानं स[1] पश्यति ॥ २५७ ॥
अनाभोगगतिः शान्ता प्रणिधानैर्विशोधिता।
ज्ञानमनात्मकं श्रेष्ठं निराभासे न पश्यति ॥ २५८ ॥
चित्तस्य गोचरं पश्येत्पश्येज्ज्ञानस्य गोचरम्।
प्रज्ञाया गोचरं पश्येल्लक्षणे न प्रमुह्यते ॥ २५९ ॥
चित्तस्य दुःखसत्यं समुदयो ज्ञानगोचरः।
द्वे सत्ये बुद्धभूमिश्च प्रज्ञा यत्र प्रवर्तते ॥ २६० ॥
फलप्राप्तिश्च निर्वाणं मार्गमष्टाङ्गिकं तथा।
सर्वधर्मावबोधेन बुद्धज्ञानं विशुध्यते ॥ २६१ ॥
चक्षुश्च रूपमालोक आकाशश्च मनस्तथा।
एभिरुत्पद्यते नृणां विज्ञानं ह्यालयोद्भवम् ॥ २६२ ॥
ग्राह्यं ग्राह्यो ग्रहीता च नास्ति नाम ह्यवस्तुकम्।
निर्हेतुकं विकल्पं ये मन्यन्ति हि न ते बुधाः ॥ २६३ ॥
अर्थे नाम ह्यसंभूतमर्थो नाम्नि तथैव च।
N 300 हेत्वहेतुसमुत्पन्नं विकल्पं न विकल्पयेत् ॥ २६४ ॥
सर्वभावस्वभावोऽसन् वचनं हि तथाप्यसत्।
शून्यतां शून्यतार्थं वा बालोऽपश्यन् विधावति ॥ २६५ ॥

---

१ N न पश्यते for स पश्यति which is based on Nepalese Ms.

सत्त्वस्थितिं मन्यनया दंष्ट्रा प्रज्ञप्तिदेशना।
एकत्वं पञ्चधासिद्धमिदं सत्यं प्रहीयते ॥ २६६ ॥
प्रपञ्चमारभेदश्च अस्तिनास्ति व्यतिक्रमेत्।
नास्तिच्छन्दो भवे मिथ्यासंज्ञा नैरात्म्यदर्शनात् ॥ २६७ ॥
शाश्वतं हि सकर्तृत्वं वादमात्रप्रवर्तितम्।
सत्यं परं ह्यवक्तव्यं निरोधे धर्मदर्शनम् ॥ २६८ ॥
आलयं हि समाश्रित्य मनो वै संप्रवर्तते।
चित्तं मनश्च संश्रित्य विज्ञानं संप्रवर्तते ॥ २६९ ॥
समारोपं समारोप्य तथता चित्तधर्मता।
एतद्विभावयन् योगी चित्तमात्रज्ञतां लभेत् ॥ २७० ॥
मनश्च लक्षणं वस्तु नित्यानित्ये न मन्यते।
उत्पादं चाप्यनुत्पादं योगी योगे न मन्यते ॥ २७१ ॥
अर्थद्वयं न कल्पेन्ति विज्ञानं ह्यालयोद्भवम्।
एकमर्थं द्विचित्तेन न जानीते तदुद्भवम् ॥ २७२ ॥ N 301
न वक्ता न च वाच्योऽस्ति न शून्यं चित्तदर्शनात्।
अदर्शनात्स्वचित्तस्य दृष्टिजालं प्रवर्तते ॥ २७३ ॥
प्रत्ययागमनं नास्ति इन्द्रियाणि न केचन।
न धातवो न च स्कन्धा न रागो न च संस्कृतम् ॥ २७४ ॥
कर्मणोऽग्निं न वै पूर्वं न कृतं न च संस्कृतम्।
न कोटि न च वै शक्तिर्न मोक्षो न च बन्धनम् ॥ २७५ ॥
अव्याकृतो न भावोऽस्ति धर्माधर्मं न चैव हि।
न कालं न च निर्वाणं धर्मतापि न विद्यते ॥ २७६ ॥
न च बुद्धो न सत्यानि न फलं न च हेतवः।
विपर्ययो न निर्वाणं विभवो नास्ति संभवः ॥ २७७ ॥
द्वादशाङ्गं न चैवास्ति अन्तानन्तं न चैव हि।
सर्वदृष्टिप्रहाणाय चित्तमात्रं वदाम्यहम् ॥ २७८ ॥
क्लेशाः कर्मपथा देहः कर्तारश्च फलं च वै।
मरीचिस्वप्नसंकाशा गन्धर्वनगरोपमाः ॥ २७९ ॥
चित्तमात्रव्यवस्थानाद्व्यावृत्तं भावलक्षणम्।
चित्तमात्रप्रतिष्ठानाच्छाश्वतोच्छेददर्शनम् ॥ २८० ॥

---

१ N दृष्टा; our reading is based on T.

स्कन्धा न सन्ति निर्वाणे न चैवात्मा न लक्षणम्।
N 302 चित्तमात्रावतारेण मोक्षग्राहान्निवर्तते ॥ २८१ ॥
भूदृश्यहेतुको दोषो बहिर्धा[१] ख्यायते नृणाम्।
चित्तं ह्यदृश्यसंभूतं तेन चित्तं न दृश्यते ॥ २८२ ॥
देहभोगप्रतिष्ठाना[२] ख्यायते वासना नृणाम्।
चित्तं न भावो नाभावो वासने न विराजते ॥ २८३ ॥
मलो वै ख्यायते शुक्ले न शुक्ले ख्यायते मलः।
घने हि गगनं यद्वत्तथा चित्तं न दृश्यते ॥ २८४ ॥
चित्तेन चीयते कर्म ज्ञानेन च विचीयते।
प्रज्ञया च निराभासं प्रभावं चाधिगच्छति ॥ २८५ ॥
चित्तं विषयसंबद्धं ज्ञानं तर्के प्रवर्तते।
निराभासे विशेषे च ज्ञानं वै संप्रवर्तते ॥ २८६ ॥
चित्तं मनश्च विज्ञानं संज्ञा वै कल्पवर्जिता।
अविकल्पधर्मतां प्राप्ताः श्रावका न जिनात्मजाः ॥ २८७ ॥
क्षान्ते क्षान्ते विशेषे वै ज्ञानं ताथागतं शुभम्।
संजायते विशेषार्थं समुदाचारवर्जितम् ॥ २८८ ॥
परिकल्पितस्वभावोऽस्ति परतन्त्रो न विद्यते।
कल्पितं गृह्यते भ्रान्त्या परतन्त्रं न कल्प्यते ॥ २८९ ॥
N 303 चित्तं ह्यभूतसंभूतं न चित्तं दृश्यते क्वचित्।
देहभोगप्रतिष्ठानं ख्यायते वासना नृणाम् ॥ २९० ॥
न सर्वभौतिकं रूपमस्ति रूपमभौतिकम्।
गन्धर्वस्वप्नमाया या मृगतृष्णा ह्यभौतिका ॥ २९१ ॥
प्रज्ञा हि त्रिविधा मह्यमार्यं येन प्रभावितम्।
चित्तं ह्यदृश्यसंभूतं तेन चित्तं न दृश्यते ॥ २९२ ॥
देहभोगप्रतिष्ठाना ख्यायते वासना नृणाम्।
लक्षणं कल्पते येन यः स्वभावान् वृणोति च ॥ २९३ ॥
यानद्वयविसंयुक्ता प्रज्ञा ह्याभासवर्जिता।
संभवाभिनिवेशेन श्रावकाणां प्रवर्तते।
चित्तमात्रावतारेण प्रज्ञा ताथागतीऽमला ॥ २९४ ॥
सतो हि असतश्चापि प्रत्ययैर्यदि जायते।
एकत्वान्यत्वदृष्टिश्च अवश्यं तैः समाश्रिता ॥ २९५ ॥

---

१ N बहिर्व्याख्यायते; our reading is based on Nepalese Ms.
२ N °प्रतिष्ठाभा; our reading is based on Nepalese Ms.

विविधागतिर्हि निर्वृत्ता यथा माया न सिध्यति ।
निमित्तं हि तथा चित्रं कल्प्यमानं न सिध्यति ॥ २९६ ॥
निमित्तदौष्ठुल्यमयं बन्धनं चित्तसंभवम् ।
परिकल्पितं ह्यजानानैः परतन्त्रं विकल्प्यते ॥ २९७ ॥ N 304
य एव कल्पितो भावः परतन्त्रं तदेव हि ।
कल्पितं हि विचित्राभं परतन्त्रं विकल्प्यते ॥ २९८ ॥
संवृतिः परमार्थश्च तृतीयं नास्ति हेतुकम् ।
कल्पितं संवृतिर्ह्युक्ता तच्छेदादार्यगोचरः ॥ २९९ ॥
यथा हि योगिनां वस्तु चित्रमेकं विराजते ।
न ह्यस्ति चित्रता तत्र तथा कल्पितलक्षणम् ॥ ३०० ॥
यथा हि तैमिरैश्चित्रं कल्प्यते रूपदर्शनम् ।
तिमिरं न रूपं नारूपं परतन्त्रं तथा बुधैः ॥ ३०१ ॥
हेमं स्यात्तु यथा शुद्धं जलं कलुषवर्जितम् ।
गगनं हि घनाभावात्तथा शुद्धं विकल्पितम् ॥ ३०२ ॥
श्रावकस्त्रिविधो मह्यं निर्मितः प्रणिधानजः ।
रागद्वेषविसंयुक्तः श्रावको धर्मसंभवः ॥ ३०३ ॥
बोधिसत्त्वोऽपि त्रिविधो बुद्धानां नास्ति लक्षणम् ।
चित्ते चित्ते तु सत्त्वानां बुद्धबिम्बं विदृश्यते ॥ ३०४ ॥
नास्ति वै कल्पितो भावः परतन्त्रं च विद्यते ।
समारोपापवादं च विकल्पं नो विनश्यति ॥ ३०५ ॥
कल्पितं यद्यभावः स्यात्परतन्त्रस्वभावतः । N 305
विनाभावेन वै भावं भावश्चाभावसंभवः ॥ ३०६ ॥
परिकल्पितं समाश्रित्य परतन्त्रं प्रलभ्यते ।
निमित्तनामसंबन्धाज्जायते परिकल्पितम् ॥ ३०७ ॥
अत्यन्तं चाप्यनिष्पन्नं कल्पितेन परोद्भवम् ।
तदा प्रज्ञायते शुद्धः स्वभावः पारमार्थिकः ॥ ३०८ ॥
परिकल्पितं दशविधं परतन्त्रं च षड्विधम् ।
तथता च प्रत्यात्मगतिमतो नास्ति विशेषणम् ॥ ३०९ ॥
पञ्च धर्मा भवेत्तत्वं स्वभावा हि त्रयस्तथा ।
एतद्विभावयन् योगी तथतां नातिवर्तते ॥ ३१० ॥
नक्षत्रमेघसंस्थानं सोमभास्करसंनिभम् ।
चित्तं संदृश्यते नृणां दृश्याभं वासनोदितम् ॥ ३११ ॥

भूतालब्धात्मका ह्येते न लक्ष्यं न च लक्षणम्।
सर्वे भूतमया भूता यदि रूपं हि भौतिकम्॥ ३१२॥

असंभूता महाभूता नास्ति भूतेषु भौतिकम्।
कारणं हि महाभूताः कार्यं भूसलिलादयः॥ ३१३॥

द्रव्यप्रज्ञप्तिरूपं च मायाजातिकृतं तथा।
N 306 स्वप्नगन्धर्वरूपं च मृगतृष्णा च पञ्चमम्॥ ३१४॥

इच्छन्तिकं पञ्चविधं गोत्राः पञ्च तथा भवेत्।
पञ्च यानान्ययानं च निर्वाणं षड्विधं भवेत्॥ ३१५॥

स्कन्धभेदाश्चतुर्विंशद्रूपं चाष्टविधं भवेत्।
बुद्धा भवेच्चतुर्विंशद्विविधाश्च जिनौरसाः॥ ३१६॥

अष्टोत्तरं नयशतं श्रावकाश्च त्रयस्तथा।
क्षेत्रमेकं हि बुद्धानां बुद्धश्चैकस्तथा भवेत्॥ ३१७॥

विमुक्तयस्तथा तिस्रश्चित्तधारा चतुर्विधा।
नैरात्म्यं षड्विधं मह्यं ज्ञेयं चापि चतुर्विधम्॥ ३१८॥

कारणैश्च विसंयुक्तं दृष्टिदोषविवर्जितम्।
प्रत्यात्मवेद्यमचलं महायानमनुत्तरम्॥ ३१९॥

उत्पादं चाप्यनुत्पादमष्टधा नवधा भवेत्।
एकानुपूर्वसमयं सिद्धान्तमेकमेव च॥ ३२०॥

आरूप्यधात्वष्टविधं ध्यानभेदश्च षड्विधः।
प्रत्येकजिनपुत्राणां निर्याणं सप्तधा भवेत्॥ ३२१॥

अध्वत्रयं न चैवास्ति नित्यानित्यं च नास्ति वै।
क्रिया कर्म फलं चैव स्वप्नकार्यं तथा भवेत्॥ ३२२॥

अन्ताद्यासंभवा बुद्धाः श्रावकाश्च जिनौरसाः।
N 307 चित्तं दृश्यविसंयुक्तं मायाधर्मोपमं सदा॥ ३२३॥

गर्भश्चक्रं तथा जातिर्नैष्क्रम्यं तुषितालयम्।
सर्वक्षेत्रगताश्चापि दृश्यन्ते न च योनिजाः॥ ३२४॥

संक्रान्तिं संचरं सत्त्वं देशना निर्वृतिस्तथा।
सत्यं क्षेत्रावबोधिश्च प्रत्ययप्रेरितो भवेत्॥ ३२५॥

लोका वनस्पतिर्द्वीपो नैरात्म्यतीर्थसंचरम्।
ध्यानं यानालयप्राप्तिरचिन्त्यफलगोचरम्॥ ३२६॥

चन्द्रनक्षत्रगोत्राणि नृपगोत्रा सुरालयम्।
यक्षगन्धर्वगोत्राणि कर्मजा तृष्णसंभवा॥ ३२७॥

अचिन्त्यपरिणामी च च्युतिर्वासनसंयुता ।
व्युच्छिन्नच्युत्यभावेन क्लेशजालं निरुध्यते ॥ ३२८ ॥
धनधान्यं सुवर्णं च क्षेत्रवस्तु विकल्प्यते ।
गवैडकाश्च दासा वै तथा हयगजादयः ॥ ३२९ ॥
तल्पविद्धे न स्वप्तव्यं भूमिश्चापि न लेपयेत् ।
सौवर्णराजतं पात्रं कांसं ताम्रं न कारयेत् ॥ ३३० ॥
कम्बला नीलरक्ताश्च काषायो गोमयेन च ।
कर्दमैः फलपत्रैश्च शुक्लान् योगी रजेत्सदा ॥ ३३१ ॥
शैलीकं मृन्मयं लोहं शाङ्खं वै स्फटिकमयम् । N 308
पात्रार्थं धारयेद्योगी परिपूर्णं च मागधम् ॥ ३३२ ॥
चतुरङ्गुलं भवेच्छस्त्रं कुब्जं वै वस्तुच्छेदनः ।
शिल्पविद्यां न शिक्षेत योगी योगपरायणः ॥ ३३३ ॥
क्रयविक्रयो न कर्तव्यो योगिना योगिवाहिना ।
आरामिकैश्च कर्तव्यमेतद्धर्मं वदाम्यहम् ॥ ३३४ ॥
गुप्तेन्द्रियं तथार्थज्ञं सूत्रान्ते विनये तथा ।
गृहस्थैर्न च संसृष्टं योगिनं तं वदाम्यहम् ॥ ३३५ ॥
शून्यागारे श्मशाने वा वृक्षमूले गुहासु वा ।
पलालेऽभ्यवकाशे च योगी वासं प्रकल्पयेत् ॥ ३३६ ॥
त्रिवस्त्रप्रावृतो नित्यं श्मशानाद्यत्रकुत्रचित् ।
वस्त्रार्थं संविधातव्यं यश्च दद्यात्सुखागतम् ॥ ३३७ ॥
युगमात्रानुसारी स्यात्पिण्डभक्षपरायणः ।
कुसुमेभ्यो यथा भ्रमरास्तथा पिण्डं समाचरेत् ॥ ३३८ ॥
गणे च गणसंसृष्टे भिक्षुणीषु च यद्भवेत् ।
तद्धि आजीवसंसृष्टं न तत्कल्पति योगिनाम् ॥ ३३९ ॥
राजानो राजपुत्राश्च अमात्याः श्रेष्ठिनस्तथा ।
पिण्डार्थे नोपदेशेत योगी योगपरायणः ॥ ३४० ॥ N 309
[1]मृतसूतकुलान्नं च मित्रप्रीतिसमन्वितम् ।
भिक्षुभिक्षुणिसंसृष्टं न तत्कल्पति योगिनाम् ॥ ३४१ ॥
विहारे यत्र वै धूमः पच्यते विधिवत्सदा ।
उद्दिश्य यत्कृतं चापि न तत्कल्पति योगिनाम् ॥ ३४२ ॥

---

१ N तृगसूत्रकुलानं; our reading is based on T.

उत्पादभङ्गनिर्मुक्तं सदसत्पक्षवर्जितम्।
लक्ष्यलक्षणसंयुक्तं योगी लोकं विभावयेत्॥ ३४३॥
समाधिबलसंयुक्तमभिज्ञैर्वशितैश्च वै।
नचिरात्तु भवेद्योगी यद्युत्पादं न कल्पयेत्॥ ३४४॥
अणुकालप्रधानेभ्यः कारणेभ्यो न कल्पयेत्।
हेतुप्रत्ययसंभूतं योगी लोकं न कल्पयेत्॥ ३४५॥
स्वकल्पकल्पितं लोकं चित्रं वै वासनोदितम्।
प्रतिपश्येत्सदा योगी मायास्वप्नोपमं भवम्॥ ३४६॥
अपवादसमारोपवर्जितं दर्शनं सदा।
देहभोगप्रतिष्ठाभं त्रिभवं न विकल्पयेत्॥ ३४७॥
कृतभक्तपिण्डो निश्चितमृजुं संस्थाप्य वै तनुम्।
बुद्धांश्च बोधिसत्त्वांश्च नमस्कृत्य पुनः पुनः॥ ३४८॥
विनयात्सूत्रयुक्तिभ्यां तत्त्वं संहृत्य योगवित्।
पञ्चधर्मस्वचित्तं च नैरात्म्यं च विभावयेत्॥ ३४९॥
N 310 प्रत्यात्मधर्मताशुद्धा भूमयो बुद्धभूमि च।
एतद्विभावयेद्योगी महापद्मेऽभिषिच्यते॥ ३५०॥
विश्राम्य गतयः सर्वा भवादुद्वेगमानसः।
योगानारभते चित्रां गत्वा शिवपथीं शुभाम्॥ ३५१॥
सोमभास्करसंस्थानं पद्मपत्रांशुसप्रभम्।
गगनाग्निचित्रसदृशं योगी पुञ्जान् प्रपश्यते॥ ३५२॥
निमित्तानि च चित्राणि तीर्थ्यमार्गं नयन्ति ते।
श्रावकत्वे निपात्यन्ति प्रत्येकजिनगोचरे॥ ३५३॥
विधूय सर्वाण्येतानि निराभासो यदा भवेत्।
तदा बुद्धकरादित्याः सर्वक्षेत्रसमागताः।
शिरो हि तस्य मार्जन्ति निमित्तं तथतानुगाः॥ ३५४॥
अस्त्यनाकारतो भावः शाश्वतोच्छेदवर्जितः।
सदसत्पक्षविगताः कल्पयिष्यन्ति मध्यमम्॥ ३५५॥
अहेतुवादे कल्प्यन्ते अहेतूच्छेददर्शनम्।
बाह्यभावापरिज्ञानान्नाशयिष्यन्ति मध्यमम्॥ ३५६॥
भावग्राहं न मोक्ष्यन्ते[1] मा भूदुच्छेददर्शनम्।
समारोपापवादेन देशयिष्यन्ति मध्यमम्॥ ३५७॥

---

१ N मोक्षते.

चित्तमात्रावबोधेन बाह्यभावा व्युदाश्रया । N 311
विनिवृत्तिर्विकल्पस्य प्रतिपत्[1] सैव मध्यमा ॥ ३५८ ॥
चित्तमात्रं न दृश्यन्ति दृश्याभावान्न जायते ।
प्रतिपन्मध्यमा चैषा मया चान्यैश्च देशिता ॥ ३५९ ॥
उत्पादं चाप्यनुत्पादं भावाभावश्च शून्यता ।
नैःस्वभाव्यं च भावानां द्वयमेतन्न कल्पयेत् ॥ ३६० ॥
विकल्पवृत्त्या भावो न मोक्षं कल्पेन्ति बालिशाः ।
न चित्तवृत्त्यसंबोधाद्द्वयग्राहः प्रहीयते ॥ ३६१ ॥
स्वचित्तदृश्यसंबोधाद्द्वयग्राहः प्रहीयते ।
प्रहाणं हि परिज्ञानं विकल्प्यस्याविनाशकम् ॥ ३६२ ॥
चित्तदृश्यपरिज्ञानाद्विकल्पो न प्रवर्तते ।
अप्रवृत्तिर्विकल्पस्य तथता चित्तवर्जिता ॥ ३६३ ॥
तीर्थ्यदोषविनिर्मुक्ता प्रवृत्तिर्यदि दृश्यते ।
सा विद्वद्भिर्भवेद्ग्राह्या निवृत्तिश्चाविनाशतः ॥ ३६४ ॥
अस्यावबोधाद्बुद्धत्वं मया बुद्धैश्च देशितम् ।
अन्यथा कल्प्यमानं हि तीर्थ्यवादः प्रसज्यते ॥ ३६५ ॥
अजाः प्रसूतजन्मा वै अच्युताश्च च्यवन्ति च ।
युगपज्जलचन्द्राभा दृश्यन्ते क्षेत्रकोटिषु ॥ ३६६ ॥ N 312
एकधा बहुधा भूत्वा वर्षन्ति च ज्वलन्ति वै ।
चित्ते चिन्तमया भूत्वा चित्तमात्रं वदन्ति ते ॥ ३६७ ॥
चित्तेषु चित्तमात्रं च अचित्ता चित्तसंभवा ।
विचित्ररूपसंस्थानाश्चित्तमात्रे गतिंगताः ॥ ३६८ ॥
मौनीन्द्रैः श्रावकै रूपैः प्रत्येकजिनसादृशैः ।
अन्यैश्च विविधै रूपैश्चित्तमात्रं वदन्ति ते ॥ ३६९ ॥
आरूप्यरूपं ह्यारूपैर्नारकाणां च नारकम् ।
रूपं दर्श्यन्ति सत्त्वानां चित्तमात्रस्य कारणम् ॥ ३७० ॥
मायोपमं समाधिं च कायं चापि मनोमयम् ।
दश भूमीश्च वशिताः परावृत्ता लभन्ति ते ॥ ३७१ ॥
स्वविकल्पविपर्यासैः प्रपञ्चस्पन्दितैश्च वै ।
दृष्टश्रुतमतज्ञाते बाला बध्यन्ति संज्ञया ॥ ३७२ ॥

---

१ N प्रतिपत्त्ये च for प्रतिपत्सैव which is supported by T.

निमित्तं परतन्त्रं हि यन्नाम तत्र कल्पितम्।
परिकल्पितनिमित्तं पारतन्त्र्यात्प्रवर्तते ॥ ३७३ ॥
बुद्ध्या विवेच्यमानं हि न तन्त्रं नापि कल्पितम्।
N 313 निष्पन्नो नास्ति वै भावः कथं बुद्ध्या प्रकल्प्यते ॥ ३७४ ॥
निष्पन्नो विद्यते भावो भावाभावविवर्जितः।
भावाभावविनिर्मुक्तौ द्वौ स्वभावौ कथं भवेत् ॥ ३७५ ॥
परिकल्पिते स्वभावे च स्वभावौ द्वौ प्रतिष्ठितौ।
कल्पितं दृश्यते चित्रं विशुद्धमार्यगोचरम् ॥ ३७६ ॥
कल्पितं हि विचित्राभं परतन्त्रे विकल्प्यते।
अन्यथा कल्प्यमानं हि तीर्थ्यवादं समाश्रयेत् ॥ ३७७ ॥
कल्पना कल्पनेत्युक्तं दर्शनाद्धेतुसंभवम्।
विकल्पद्वयनिर्मुक्तं निष्पन्नं स्यात्तदेव हि ॥ ३७८ ॥
क्षेत्रं बुद्धाश्च निर्माणा एकं यानं त्रयं तथा।
न निर्वाणमहं सर्वे शून्या[1] उत्पत्तिवर्जिताः ॥ ३७९ ॥
षट्त्रिंशद्बुद्धभेदाश्च दश भेदाः पृथक्पृथक्।
सत्त्वानां चित्तसंताना एते क्षेत्राण्यभाजनम् ॥ ३८० ॥
यथा हि कल्पितं भावं ख्यायते चित्रदर्शनम्।
न ह्यस्ति चित्रता तत्र बुद्धधर्मं तथा जगत् ॥ ३८१ ॥
धर्मबुद्धो भवेद्बुद्धः शेषा वै तस्य निर्मिताः।
सत्त्वाः स्वबीजसंतानं पश्यन्ते बुद्धदर्शनैः ॥ ३८२ ॥
भ्रान्तिनिमित्तसंबन्धाद्विकल्पः संप्रवर्तते।
N 314 विकल्पा तथता नान्या न निमित्ता विकल्पना ॥ ३८३ ॥
स्वाभाविकश्च संभोगो निर्मितं पञ्चनिर्मितम्।
षट्त्रिंशकं बुद्धगणं बुद्धः स्वाभाविको भवेत् ॥ ३८४ ॥
नीले रक्तेऽथ लवणे शङ्खे क्षीरे च शार्करे।
कषायैः फलपुष्पाद्यैः किरणा यथ भास्करे ॥ ३८५ ॥
न चान्ये न च नानन्ये तरंगा ह्युदधाविव[2]।
विज्ञानानि तथा सप्त चित्तेन सह संयुता ॥ ३८६ ॥
उदधेः परिणामोऽसौ तरंगाणां विचित्रता।
आलयं हि तथा चित्रं विज्ञानाख्यं प्रवर्तते ॥ ३८७ ॥

---

१ N शून्यामुत्पत्तिवर्जिताम्; our reading is based on T. २ N उदधान्विता; our reading is based on C.

चित्तं मनश्च विज्ञानं लक्षणार्थं प्रकल्प्यते ।
अभिन्नलक्षणान्यष्टौ न च लक्ष्यं न लक्षणम् ॥ ३८८ ॥
उदधेश्च तरंगाणां यथा नास्ति विशेषणम् ।
विज्ञानानां तथा चित्ते परिणामो न लभ्यते ॥ ३८९ ॥
चित्तेन चीयते कर्म मनसा च विचीयते ।
विज्ञानेन विजानाति दृश्यं कल्पेति पञ्चभिः ॥ ३९० ॥
नीलरक्तप्रकार हि विज्ञानं ख्यायते नृणाम् । N 315
तरंगचित्तसाधर्म्यं वद कस्मान्महामुने ॥ ३९१ ॥
नीलरक्तप्रकारं हि तरंगेषु न विद्यते ।
वृत्तिश्च वर्ण्यते चित्ते लक्षणार्थं हि बालिशाः ॥ ३९२ ॥
न तस्य विद्यते वृत्तिः स्वचित्तं ग्राह्यवर्जितम् ।
ग्राह्ये सति हि वै ग्राहस्तरंगैः सह साध्यते ॥ ३९३ ॥
देहभोगप्रतिष्ठानं विज्ञानं ख्यायते नृणाम् ।
तेनास्य दृश्यते वृत्तिस्तरंगैः सहसादृशा ॥ ३९४ ॥
उदधिस्तरंगभावेन नृत्यमानो विभाव्यते ।
आलयस्य तथा वृत्तिः कस्माद्बुद्ध्या न गृह्यते ॥ ३९५ ॥
बालानां बुद्धिवैकल्यादालयं ह्युदधेर्यथा ।
तरंगवृत्तिसाधर्म्या दृष्टान्तेनोपनीयते ॥ ३९६ ॥
उदेति भास्करो यद्वत्सम हीनोत्तमे जने ।
तथा त्वं लोकप्रद्योत तत्त्वं देशेसि बालिशान् ॥ ३९७ ॥
कृत्वा धर्मेष्ववस्थानं कस्मात्तत्त्वं न भाषसे ।
भाषसे यदि तत्त्वं वै तत्त्वं चित्ते न विद्यते ॥ ३९८ ॥
उदधेर्यथा तरंगाणि दर्पणे सुपिने यथा ।
दृश्यन्ते युगपत्काले तथा चित्तं स्वगोचरे ।
वैकल्याद्विषयाणां हि क्रमवृत्त्या प्रवर्तते ॥ ३९९ ॥ N 316
विज्ञानेन विजानाति मनसा मन्यते पुनः ।
पञ्चानां ख्यायते दृश्यं क्रमो नास्ति समाहिते ॥ ४०० ॥
चित्राचार्यो यथा कश्चिच्चित्रान्तेवासिकोऽपि वा ।
चित्रार्थे नामयेद्रङ्गं देशनापि तथा मम ॥ ४०१ ॥
रङ्गे न विद्यते चित्रं न कुड्ये न च भाजने ।
सत्त्वानां कर्षणार्थाय रङ्गैश्चित्रं विकल्प्यते ॥ ४०२ ॥

देशनाव्यभिचारी च तत्त्वं ह्यक्षरवर्जितम्।
कृत्वा धर्मे व्यवस्थानं तत्त्वं देशेमि योगिनाम्॥ ४०३॥
तत्त्वं प्रत्यात्मगतिकं कल्प्यकल्पनवर्जितम्।
देशेमि जिनपुत्राणां बालानां देशनान्यथा॥ ४०४॥
विचित्रा हि यथा माया दृश्यते न च विद्यते।
देशना हि तथा चित्रा दृश्यतेऽव्यभिचारिणी॥ ४०५॥
देशना हि यदन्यस्य तदन्यस्याप्यदेशना।
आतुरे आतुरे यद्वद्भिषग्द्रव्यं प्रयच्छति।
बुद्धा हि तद्वत्सत्त्वानां चित्तमात्रं वदन्ति ते॥ ४०६॥
N 317 बाह्यवासनबीजेन विकल्पः संप्रवर्तते।
तन्त्रं हि येन गृह्णाति यद्गृह्णाति स कल्पितम्॥ ४०७॥
बाह्यमालम्बनं गृह्यं चित्तं चाश्रित्य जायते।
द्विधा प्रवर्तते भ्रान्तिस्तृतीयं नास्ति कारणम्॥ ४०८॥
यस्माच्च जायते भ्रान्तिर्यदाश्रित्य च जायते।
षड्द्वादशाष्टादशकं चित्तमेव वदाम्यहम्॥ ४०९॥
स्वबीजग्राह्यसंबन्धादात्मग्राहः प्रहीयते।
चित्तकल्पावतारेण धर्मग्राहः प्रहीयते॥ ४१०॥
यत्तु आलयविज्ञानं तद्विज्ञानं प्रवर्तते।
आध्यात्मिकं ह्यायतनं भवेद्बाह्यं यदाभया॥ ४११॥
नक्षत्रकेशग्रहणं स्वप्नरूपं यथाबुधैः।
संस्कृतासंस्कृतं नित्यं कल्प्यते न च विद्यते॥ ४१२॥
गन्धर्वनगरं माया मृगतृष्णाम्भसां[1] यथा।
असन्तो[2] वा विदृश्यन्ते परतन्त्रं तथा भवेत्॥ ४१३॥
आत्मेन्द्रियोपचारं हि त्रिचित्ते देशयाम्यहम्।
चित्तं मनश्च विज्ञानं स्वलक्षणविसंयुता॥ ४१४॥
चित्तं मनश्च विज्ञानं नैरात्म्यं स्याद्द्वयं तथा।
पञ्च धर्माः स्वभावा हि बुद्धानां गोचरो ह्ययम्॥ ४१५॥
लक्षणेन भवेत्त्रीणी एकं वासनहेतुकाः।
N 318 रङ्गं हि यथाप्येकं कुड्ये चित्रं विदृश्यते॥ ४१६॥
नैरात्म्यमद्वयं चित्तं मनोविज्ञानमेव च।
पञ्च धर्माः स्वभावा हि मम गोत्रे न सन्ति ते॥ ४१७॥

१ N मृगतृष्णाभासं for °तृष्णाम्भसां. २ N आसन्तो for असन्तो.

चित्तलक्षणनिर्मुक्तं विज्ञानमनवर्जितम् ।
धर्मस्वभावविरहं गोत्रं ताथागतं लभेत् ॥ ४१८ ॥
कायेन वाचा मनसा न तत्र क्रियते शुभम् ।
गोत्रं ताथागतं शुद्धं समुदाचारवर्जितम् ॥ ४१९ ॥
अभिज्ञैर्वशितैः शुद्धं समाधिबलमण्डितम् ।
कायं मनोमयं चित्तं गोत्रं ताथागतं शुभम् ॥ ४२० ॥
प्रत्यात्मवेद्यं ह्यमलं हेतुलक्षणवर्जितम् ।
अष्टमी बुद्धभूमिश्च गोत्रं ताथागतं भवेत् ॥ ४२१ ॥
दूरंगमा साधुमती धर्ममेघा तथागती ।
एतद्धि गोत्रं बुद्धानां शेषा यानद्वयावहा ॥ ४२२ ॥
सत्त्वसंतानभेदेन लक्षणार्थं च बालिशाम् ।
देश्यन्ते भूमयः सप्त बुद्धैश्चित्तवशं गताः ॥ ४२३ ॥
वाक्कायचित्तदौष्ठुल्यं सप्तम्यां न प्रवर्तते ।
अष्टम्यां ह्याश्रयस्तस्य स्वप्नौघसमसादृशः ॥ ४२४ ॥
भूम्यष्टम्यां च पञ्चम्यां शिल्पविद्याकलागमम् । N 319
कुर्वन्ति जिनपुत्रा वै नृपत्वं च भवालये ॥ ४२५ ॥
उत्पादमथ नोत्पादं शून्याशून्यं न कल्पयेत् ।
स्वभावमस्वभावत्वं चित्तमात्रे न विद्यते ॥ ४२६ ॥
इदं तथ्यमिदं तथ्यमिदं मिथ्या विकल्पयेत् ।
प्रत्येकश्रावकाणां च देशना न जिनौरसाम् ॥ ४२७ ॥
सच्चासच्च सतो नैव क्षणिकं लक्षणं न वै ।
प्रज्ञप्तिद्रव्यसन्नैव चित्तमात्रे न विद्यते ॥ ४२८ ॥
भावा विद्यन्ति संवृत्या परमार्थे न भावकाः ।
निःस्वभावेषु या भ्रान्तिस्तत्सत्यं संवृतिर्भवेत् ॥ ४२९ ॥
असत्सु सर्वधर्मेषु प्रज्ञप्तिः क्रियते मया ।
अभिलापो व्यवहारश्च बालानां तत्त्ववर्जितः ॥ ४३० ॥
अभिलापसंभवो भावो विद्यते ह्यर्थगोचरः ।
अभिलापसंभवो भावो दृष्ट्वा वै नास्ति विद्यते ॥ ४३१ ॥
कुड्याभावे यथा चित्रं छायायां स्थाणुवर्जिते ।
आलयं तु तथा शुद्धं तरंगे न विराजते ॥ ४३२ ॥
नटवत्तिष्ठते चित्तं मनो विदूषसादृशम् ।
विज्ञानपञ्चकैः सार्धं दृश्यं कल्पति रङ्गवत् ॥ ४३३ ॥

N 320 देशनाधर्मनिष्यन्दो यच्च निष्यन्दनिर्मितम्।
बुद्धा ह्येते भवेत्पौराः शेषा निर्माणविग्रहाः ॥ ४३४ ॥
दृश्यं न विद्यते चित्तं चित्तं दृश्यात्प्रमुह्यते।
देहभोगप्रतिष्ठानमालयं ख्यायते नृणाम् ॥ ४३५ ॥
चित्तं मनश्च विज्ञानं स्वभावं धर्मपञ्चकम्।
नैरात्म्यं द्वितयं शुद्धं प्रभाषन्ते विनायकाः ॥ ४३६ ॥
तार्किकाणामविषयं श्रावकाणां न चैव हि।
यं देशयन्ति वै नाथा प्रत्यात्मगतिगोचरम् ॥ ४३७ ॥
दीर्घह्रस्वादिसंबद्धमन्योन्यतः प्रवर्तते।
अस्तित्वसाधका नास्ति अस्ति नास्तित्वसाधकम् ॥ ४३८ ॥
अणुशो विभज्य द्रव्यं न वै रूपं विकल्पयेत्।
चित्तमात्रव्यवस्थानं कुदृष्ट्या न प्रसीदति ॥ ४३९ ॥
मा शून्यतां विकल्पेथ माशून्यमिति वा पुनः।
नास्त्यस्ति कल्पनैवेयं कल्प्यमर्थं न विद्यते ॥ ४४० ॥
गुणाणुद्रव्यसंघातै रूपं बालैर्विकल्प्यते।
एकैकमणुशो नास्ति अतोऽप्यर्थं न विद्यते ॥ ४४१ ॥
स्वचित्तं दृश्यसंस्थानं बहिर्धा ख्यायते नृणाम्।
N 321 बाह्यं न विद्यते दृश्यमतोऽप्यर्थं न विद्यते ॥ ४४२ ॥
चित्रं केशोण्डुकं मायां स्वप्नं गन्धर्वमेव च।
अलातं मृगतृष्णा च असन्तं ख्यायते नृणाम् ॥ ४४३ ॥
नित्यानित्यं तथैकत्वमुभयं नोभयं तथा।
अनादिदोषसंबद्धा बालाः कल्पेन्ति मोहिताः ॥ ४४४ ॥
यानव्यवस्था नैवास्ति यानमेकं वदाम्यहम्।
परिकर्षणार्थं बालानां यानभेदं वदाम्यहम् ॥ ४४५ ॥
विमुक्तयस्तथा तिस्रो धर्मनैरात्म्यमेव च।
समताज्ञानक्लेशाख्या विमुक्त्या ते विवर्जिताः ॥ ४४६ ॥
यथा हि काष्ठमुदधौ तरंगैर्विप्रवाह्यते।
तथा च श्रावको मूढो लक्षणेन प्रवाह्यते ॥ ४४७ ॥
निष्ठागतिर्न तत्तस्या न च भूयो निवर्तते।
समाधिकायं संप्राप्य [1]आ कल्पान्न प्रबुध्यते ॥ ४४८ ॥

---

1 N अकल्पान्न for आ कल्पान्न which is based upon T.

वासनाक्लेशसंबद्धा पर्युत्थानैर्विसंयुताः।
समाधिमदमत्तास्ते धातौ तिष्ठन्त्यनास्रवे ॥ ४४९ ॥
यथा हि मत्तः पुरुषो मद्याभावाद्विबुध्यते।
तथा ते बुद्धधर्माख्यं कायं प्राप्स्यन्ति मामकम् ॥ ४५० ॥
पङ्कमग्नो यथा हस्ती इतस्ततो न धावति। N 322
समाधिमदमग्ना वै तथा तिष्ठन्ति श्रावकाः ॥ ४५१ ॥
अधिष्ठानं नरेन्द्राणां प्रणिधानैर्विशोधितम्।
अभिषेकसमाध्याद्यं[1] प्रथमा दशमी च वै ॥ ४५२ ॥
आकाशं शशशृङ्गं च वन्ध्यायाः पुत्र एव च।
असन्तश्चाभिलप्यन्ते तथा भावेषु कल्पना ॥ ४५३ ॥
वासनाहेतुकं लोकं नासन्न सदसत्क्वचित्।
ये पश्यन्ति विमुच्यन्ते धर्मनैरात्म्यकोविदाः ॥ ४५४ ॥
स्वभावकल्पितं नाम परभावश्च तन्नजः।
निष्पन्नं तथतेत्युक्तं सूत्रे सूत्रे सदा मया ॥ ४५५ ॥
व्यञ्जनं पदकायं च नाम चापि विशेषतः।
बालाः सजन्ति दुर्मेधा यथा पङ्के महागजाः ॥ ४५६ ॥
देवयानं ब्रह्मयानं श्रावकीयं तथैव च।
ताथागतं च प्रत्येकं यानान्येतान् वदाम्यहम् ॥ ४५७ ॥
यानानां नास्ति वै निष्ठा यावच्चित्तं प्रवर्तते।
चित्ते तु वै परावृत्ते न यानं न च यायिनः ॥ ४५८ ॥
चित्तं विकल्पो विज्ञप्तिर्मनो विज्ञानमेव च।
आलयं त्रिभवश्चेष्टा एते चित्तस्य पर्ययाः ॥ ४५९ ॥ N 323
आयुरुष्माथ विज्ञानमालयो जीवितेन्द्रियम्।
मनश्च मनविज्ञानं विकल्पस्य विशेषणम् ॥ ४६० ॥
चित्तेन धार्यते कायो मनो मन्यति वै सदा।
विज्ञानं चित्तविषयं विज्ञानैः सह छिन्दति ॥ ४६१ ॥
तृष्णा हि माता इत्युक्ता अविद्या च तथा पिता।
विषयावबोधाद्विज्ञानं बुद्ध इत्युपदिश्यते ॥ ४६२ ॥
अर्हन्तो[2] ह्यनुशयाः स्कन्धाः संघः स्कन्धकपञ्चकः।
निरन्तरान्तरच्छेदात्कर्म ह्यानन्तरं भवेत् ॥ ४६३ ॥

---

१ N °समाध्याद्यः प्रथमस्यां दशमाय वै; our reading is based on T. २ अर्हन्तो-ऽनुशयाः सन्तः.

नैरात्म्यस्य द्वयं क्लेशास्तथैवावरणद्वयम्।
अचिन्त्यपरिणामिन्याश्च्युतेर्लाभास्तथागताः ॥ ४६४ ॥
सिद्धान्तश्च नयश्चापि प्रत्यात्मं शासनं च वै।
ये पश्यन्ति विभागज्ञा न ते तर्कवशं गताः ॥ ४६५ ॥
न भावो विद्यते सत्यं यथा बालैर्विकल्प्यते।
अभावेन तु वै मोक्षं कथं नेच्छन्ति तार्किकाः ॥ ४६६ ॥
उत्पादभङ्गसंबद्धं संस्कृतं प्रतिपश्यतः।
दृष्टिद्वयं प्रपुष्णन्ति न च जानन्ति प्रत्ययान् ॥ ४६७ ॥
N 324 एकमेव भवेत्सत्यं निर्वाणं मनवर्जितम्।
कदलीस्वप्नमायाभं लोकं पश्येद्विकल्पितम् ॥ ४६८ ॥
रागो न विद्यते द्वेषो मोहश्चापि न पुद्गलः।
तृष्णाया ह्युदिताः स्कन्धा विद्यन्ते स्वप्नसादृशाः ॥ ४६९ ॥
यस्यां च रात्र्यां धिगमो यस्यां च परिनिर्वृतः।
एतस्मिन्नन्तरे नास्ति मया किंचित्प्रकाशितम् ॥ ४७० ॥
प्रत्यात्मधर्मस्थितितां संधाय कथितं मया।
तैश्च बुद्धैर्मया चैव न च किंचिद्विशेषितम् ॥ ४७१ ॥
द्रव्यवद्विद्यते ह्यात्मा स्कन्धा लक्षणवर्जिताः।
स्कन्धा विद्यन्ति भावेन आत्मा तेषु न विद्यते ॥ ४७२ ॥
प्रतिपत्तिं विभावन्तो क्लेशैर्मानुषसंगमैः।
मुच्यते सर्वदुःखेभ्यः स्वचित्तं पश्यतो जगत् ॥ ४७३ ॥
कारणैः प्रत्ययैश्चापि येषां लोकः प्रवर्तते।
चातुष्कोटिकया युक्तो न ते मन्नयकोविदाः ॥ ४७४ ॥
सदसन्न जायते लोको नासन्न सदसत्कचित्।
प्रत्ययैः कारणैश्चापि कथं बालैर्विकल्प्यते ॥ ४७५ ॥
न सन्नासन्न सदसद्यदा लोकं प्रपश्यति।
N 325 तदा व्यावर्तते चित्तं नैरात्म्यं चाधिगच्छति ॥ ४७६ ॥
अनुत्पन्नाः सर्वभावा यस्मात्प्रत्ययसंभवाः।
कार्यं हि प्रत्ययाः सर्वे न कार्याज्जायते भवः ॥ ४७७ ॥
कार्यं न जायते कार्यं द्वित्वं कार्ये प्रसज्यते।
न च द्वित्वप्रसङ्गेन कार्याभावोपलभ्यते ॥ ४७८ ॥
आलम्बालम्बविगतं यदा पश्यति संस्कृतम्।
निमित्तं चित्तमात्रं हि चित्तमात्रं वदाम्यहम् ॥ ४७९ ॥

मात्रास्वभावसंस्थानं प्रत्ययैर्भाववर्जितम्।
निष्ठाभावपरं ब्रह्म एतां मात्रां वदाम्यहम्॥ ४८० ॥
प्रज्ञप्तिसत्यतो ह्यात्मा द्रव्यः स हि न विद्यते।
स्कन्धानां स्कन्धता तद्वत्प्रज्ञप्त्या न तु द्रव्यतः॥ ४८१ ॥
चतुर्विधा वै समता लक्षणं हेतुभाजनम्।
नैरात्म्यसमता चैव चतुर्थी योगयोगिनाम्॥ ४८२ ॥
व्यावृत्तिः सर्वदृष्टीनां कल्प्यकल्पनवर्जिता।
अनुपलम्भो ह्यजातिश्च चित्तमात्रं वदाम्यहम्॥ ४८३ ॥
न भावं नापि चाभावं भावाभावविवर्जितम्।
तथता चित्तनिर्मुक्तं चित्तमात्रं वदाम्यहम्॥ ४८४ ॥
तथता शून्यता कोटी निर्वाणं धर्मधातुकम्।
कायं मनोमयं चित्तं चित्तमात्रं वदाम्यहम्॥ ४८५ ॥ N 326
विकल्पवासनाबद्धं विचित्रं चित्तसंभवम्।
बहिर्धा जायते नृणां चित्तमात्रं हि लौकिकम्॥ ४८६ ॥
दृश्यं न विद्यते बाह्यं चित्तचित्रं विदृश्यते।
देहभोगप्रतिष्ठाभं चित्तमात्रं वदाम्यहम्॥ ४८७ ॥
श्रावकाणां क्षयज्ञानं बुद्धानां जन्मसंभवम्।
प्रत्येकजिनपुत्राणां असंक्लेशात्प्रवर्तते॥ ४८८ ॥
बहिर्धा नास्ति वै रूपं स्वचित्तं दृश्यते बहिः।
अनवबोधात्स्वचित्तस्य बालाः कल्पेन्ति संस्कृतम्॥ ४८९ ॥
बाह्यमर्थमजानानैः स्वचित्तचित्रदर्शनम्।
हेतुभिर्वार्यते मूढैश्चातुष्कोटिकयोजितैः॥ ४९० ॥
न हेतवो न कोट्यो वै दृष्टान्तावयवानि च।
स्वचित्तं ह्यर्थसंक्रान्तं यदि जानन्ति पण्डिताः॥ ४९१ ॥
विकल्पैर्न विकल्पेत यद्विकल्पितलक्षणम्।
कल्पितं च समाश्रित्य विकल्पः संप्रवर्तते॥ ४९२ ॥
अन्योन्याभिन्नसंबन्धादेकवासनहेतुकाः।
आगन्तुकत्वात्तद्वयोर्न चित्तं जायते नृणाम्॥ ४९३ ॥ N 327
विकल्पं चित्तचैत्तार्थी त्रिभवे च प्रतिष्ठिताः।
यदर्थाभाः प्रवर्तन्ते स्वभावकल्पितो हि सः॥ ४९४ ॥
आभासबीजसंयोगाद्द्वादशायतनानि वै।
आश्रयालम्ब्यसंयोगात्प्रक्रिया वर्ण्यते मया॥ ४९५ ॥

यथा हि दर्पणे बिम्बं केशोण्डुस्तिमिरस्य वा ।
तथा हि वासनैश्छन्नं चित्तं पश्यन्ति बालिशाः ॥ ४९६ ॥
स्वविकल्पकल्पिते ह्यर्थे विकल्पः संप्रवर्तते ।
अर्थो न विद्यते बाह्यो यथा तीर्थ्यैर्विकल्प्यते ॥ ४९७ ॥
रज्जुं यथा ह्यजानानाः सर्पं गृह्णन्ति बालिशाः ।
स्वचित्तार्थमजानाना ह्यर्थं कल्पेन्ति बाहिरम् ॥ ४९८ ॥
तथा हि रज्जुं रज्जुत्वे एकत्वान्यत्ववर्जितम् ।
किं तु स्वचित्तदोषोऽयं येन रज्जुर्विकल्प्यते ॥ ४९९ ॥
न हि यो येन भावेन कल्प्यमानो न लक्ष्यते ।
न तन्नास्त्यवगन्तव्यं धर्माणामेष धर्मता ॥ ५०० ॥
अस्तित्वपूर्वकं नास्ति अस्ति नास्तित्वपूर्वकम् ।
अतो नास्ति न गन्तव्यं अस्तित्वं न च कल्पयेत् ॥ ५०१ ॥
N 328 कल्पितं कल्प्यमानं हि यदिदं न तदात्मकम् ।
अनात्मकं कथं दृष्ट्वा विकल्पः संप्रवर्तते ॥ ५०२ ॥
रूपं रूपात्मना नास्ति तथा घटपटादयः ।
अविद्यमाने दृश्ये तु विकल्पस्तेन जायते ॥ ५०३ ॥
विकल्पस्ते यदि भ्रान्तावनादिमति संस्कृते ।
भावानां भावता केन भ्रामिता ब्रूहि मे मुने ॥ ५०४ ॥
भावानां भावता नास्ति चित्तमात्रं च दृश्यते ।
अपश्यमानः स्वचित्तं विकल्पः संप्रवर्तते ॥ ५०५ ॥
कल्पितं यदि वै नास्ति यथा कल्पति बालिशः ।
अन्यथा विद्यते चासौ न च बुद्ध्यावगम्यते ॥ ५०६ ॥
आर्याणां यदि वा सोऽस्ति नासौ बालैर्विकल्पितः ।
आर्याणामथ मिथ्यासौ आर्या बालैः समं गताः ॥ ५०७ ॥
आर्याणां नास्ति वै भ्रान्तिर्यस्माच्चित्तं विशोधितम् ।
अशुद्धचित्तसंताना बालाः कल्पेन्ति कल्पितम् ॥ ५०८ ॥
माता यथा हि पुत्रस्य आकाशात्फलमानयेत् ।
एतद्धि पुत्र मा क्रन्द गृह्ण चित्रमिदं फलम् ॥ ५०९ ॥
तथाहं सर्वसत्त्वानां विचित्रैः कल्पितैः फलैः ।
N 329 प्रलोभ्य देशेमि नयं सदसत्पक्षवर्जितम् ॥ ५१० ॥
अभूत्वा यस्य वै भावः प्रत्ययैर्न च संकुलः ।
अजातपूर्वं तज्जातमलब्धात्मकमेव च ॥ ५११ ॥

अलब्धात्मकं ह्यजातं च प्रत्ययैर्न विना क्वचित्।
उत्पन्नमपि ते भावो प्रत्ययैर्न विना क्वचित् ॥ ५१२ ॥

एवं समासतः पश्यन् नासन्न सदसत्क्वचित्।
प्रत्ययैर्जायते भूतमविकल्प्यं हि पण्डितैः ॥ ५१३ ॥

एकत्वान्यत्वकथाः कुतीर्थ्याः कुर्वन्ति बालिशाः।
प्रत्ययैर्न च जानन्ति मायास्वप्नोपमं जगत् ॥ ५१४ ॥

अभिधानविषयं यानं महायानमनुत्तरम्।
अर्थं सुनीतं हि मया न च बुध्यन्ति बालिशाः ॥ ५१५ ॥

मात्सर्यैर्ये प्रणीतानि श्रावकैस्तीर्थकैस्तथा।
व्यभिचरन्ति ते ह्यर्थं यस्मात्तर्केण देशिताः ॥ ५१६ ॥

लक्षणं भाव संस्थानं नाम चैव चतुर्विधम्।
एतदालम्बनीकृत्य कल्पना संप्रवर्तते ॥ ५१७ ॥

एकधा बहुधा ये तु ब्रह्मकायवशंगताः।
सोमभास्करयोर्भावा[1] ये नाशेन्ति न ते सुताः ॥ ५१८ ॥ N 330

आर्यदर्शनसंपन्ना यथाभूतगतिंगताः।
संज्ञाविवर्तकुशला विज्ञाने च परंगताः ॥ ५१९ ॥

एषा हि मुद्रा मुक्तानां पुत्राणां मम शासने।
भावाभावविनिर्मुक्ता गत्यागतिविवर्जिता ॥ ५२० ॥

व्यावृत्ते रूपविज्ञाने यदि कर्म विनश्यति।
नित्यानित्यं न प्राप्नोति संसारश्च न विद्यते ॥ ५२१ ॥

विनिर्वृत्तिकाले प्रध्वस्तं रूपं देशान्निवर्तते।
नास्त्यस्तिदोषनिर्मुक्तं कर्म तिष्ठति आलये ॥ ५२२ ॥

प्रध्वंसि पतितं रूपं विज्ञानं च भवालये।
रूपविज्ञानसंबद्धं न च कर्म विनश्यति ॥ ५२३ ॥

अथ तैः सह संबद्धं कर्म वै ध्वस्यते नृणाम्।
ध्वस्ते तु कर्मसंबन्धे न संसृतिर्न निर्वृतिः ॥ ५२४ ॥

अथ ध्वस्तमपि तैः सार्धं संसारे यदि जायते।
रूपं च तेन संबद्धमभिन्नत्वाद्भविष्यति ॥ ५२५ ॥

नाभिन्नं न च वै भिन्नं चित्तं रूपं विकल्पनात्।
प्रध्वंसो नास्ति भावानां सदसत्पक्षवर्जनात् ॥ ५२६ ॥

---

१ N सोमभास्करयोर्भूत्वा ये वालेन्ति न ते सुताः; our reading is based on T.

N 331 कल्पितः परतन्त्रश्च अन्योन्याभिन्नलक्षणात्।
रूपे ह्यनित्यता यद्वदन्योन्यजनकाश्च वै ॥ ५२७ ॥
अन्योऽन्यविनिर्मुक्तः कल्पितो नावधार्यते।
नास्त्यस्ति कथं भवति रूपे चानित्यता यथा ॥ ५२८ ॥
कल्पितेन सुदृष्टेन परतन्त्रो न जायते।
परतन्त्रेण दृष्टेन कल्पितस्तथता भवेत् ॥ ५२९ ॥
कल्पितं हि विनाशेते मम नेत्री विनश्यते।
समारोपापवादं च कुर्वते मम शासने ॥ ५३० ॥
एवंविधा यदा यस्मिन् काले स्युर्धर्मदूषकाः।
सर्वे च ते ह्यसंकथ्या मम नेत्रीविनाशकाः ॥ ५३१ ॥
अनालप्याश्च विद्वद्भिर्भिक्षुकार्यं च वर्जयेत्।
कल्पितं यत्र नाशेन्ति समारोपापवादिनः ॥ ५३२ ॥
केशोण्डुकमायाभं स्वप्नगन्धर्वसादृशम्।
मरीच्याभदृशकल्पो येषां नास्त्यस्तिदर्शनात् ॥ ५३३ ॥
नासौ शिक्षति बुद्धानां यस्तेषां संग्रहे चरेत्।
द्वयान्तपतिता ह्येते अन्येषां च विनाशकाः ॥ ५३४ ॥
विविक्तं कल्पितं भावं ये तु पश्यन्ति योगिनः।
N 332 भावाभावविनिर्मुक्तं तेषां वै संग्रहे चरेत् ॥ ५३५ ॥
आकरा हि यथा लोके सुवर्णमणिमुक्तिजाः।
अकर्महेतुकाश्चित्रा उपजीव्याश्च बालिशाम् ॥ ५३६ ॥
तथा हि सत्त्वगोत्राणि चित्रा वै कर्मवर्जिता।
दृश्याभावान्न कर्मास्ति न च वै कर्मजा गतिः ॥ ५३७ ॥
भावानां भावता नास्ति यथा त्वार्यैर्विभाव्यते।
किं तु विद्यन्ति वै भावा यथा बालैर्विकल्पिताः ॥ ५३८ ॥
यदि भावा व विद्यन्ते यथा बालैर्विकल्पिताः।
असत्सु सत्त्वभावेषु संक्लेशो नास्ति कस्यचित् ॥ ५३९ ॥
भाववैचित्र्यसंक्लेशात्संसारं ईन्द्रियोपगः।
अज्ञानतृष्णासंवद्धः प्रवर्तते शरीरिणाम् ॥ ५४० ॥
येषां तु भावो वै नास्ति यथा बालैर्विकल्पितः।
तेषां न विद्यते वृत्तिरिन्द्रियाणां न योगिनः ॥ ५४१ ॥

---

१ N इन्द्रियो गतः; our reading is based on T.

यदि भावा न विद्यन्ते भावसंसारहेतवः।
अयं तेन भवेन्मोक्षो बालानां क्रियवर्जितः॥ ५४२॥
बालार्याणां विशेषस्ते भावाभावात्कथं भवेत्।
आर्याणां नास्ति वै भावो विमोक्षत्रयचारिणाम्॥ ५४३॥
स्कन्धाश्च पुद्गला धर्माः स्वसामान्या अलक्षणाः। N 333
प्रत्ययानीन्द्रियाश्चैव श्रावकाणां वदाम्यहम्॥ ५४४॥
अहेतुचित्तमात्रं तु विभूति भूमयस्तथा।
प्रत्यात्मतथतां शुद्धां देशयामि जिनौरसाम्॥ ५४५॥
भविष्यन्त्यनागते काले मम शासनदूषकाः।
काषायवासोवसनाः सदसत्कार्यवादिनः॥ ५४६॥
असन्तः प्रत्ययैर्भावा विद्यन्ते ह्यार्थगोचरम्।
कल्पितो नास्ति वै भावः कल्पयिष्यन्ति तार्किकाः॥ ५४७॥
भविष्यन्त्यनागते काले कणभुग्वालजातिकाः।
असत्कार्यवाददुर्दृष्ट्या जनतां नाशयन्ति च॥ ५४८॥
अणुभ्यो जगदुत्पन्नमणवश्चाप्यहेतुकाः।
नव द्रव्याणि नित्यानि कुदृष्ट्या देशयिष्यति॥ ५४९॥
द्रव्यैरारभ्यते द्रव्यं गुणैश्चैव गुणास्तथा।
भावानां भावतामन्यां सतीं वै नाशयिष्यति॥ ५५०॥
आदिमान् हि भवेल्लोको यद्यभूत्वा प्रवर्तते।
पूर्वा च कोटिर्नैवास्ति संसारस्य वदाम्यहम्॥ ५५१॥
त्रिभवः सर्वसंख्यातं यद्यभूत्वा प्रवर्तते। N 334
श्वानोष्ट्रखरशृङ्गाणामुत्पत्तिः स्यान्न संशयः॥ ५५२॥
यद्यभूत्वा भवेच्चक्षू रूपं विज्ञानमेव च।
कटमुकुटपटाद्यानां मृत्पिण्डात्संभवो भवेत्॥ ५५३॥
पटैश्च वै कटो नास्ति पटो वै वीरणैस्तथा।
एक एकत्रा संभूतः प्रत्ययैः किं न जायते॥ ५५४॥
तज्जीवं तच्छरीरं च यच्चाभूत्वा प्रवर्तते।
परवादा ह्यमी सर्वे मया च समुदाहृताः॥ ५५५॥
उच्चार्य पूर्वपक्षं च मतिस्तेषां निवार्यते।
निवार्य तु मतिस्तेषां स्वपक्षं देशयाम्यहम्॥ ५५६॥
अतोर्थं तीर्थवादानां कृतमुच्चारणं मया।
मा मे शिष्यगणो मूढः सदसत्पक्षमाश्रयेत्॥ ५५७॥

प्रधानाज्जगदुत्पन्नं कपिलाज्ञोऽपि दुर्मतिः।
शिष्येभ्यः संप्रकाशेति गुणानां च विकारिता ॥ ५५८ ॥
न भूतं नापि चाभूतं प्रत्ययैर्न च प्रत्ययाः।
प्रत्ययानामसद्भावादभूतं न प्रवर्तते ॥ ५५९ ॥
सदसत्पक्षविगतो हेतुप्रत्ययवर्जितः।
उत्पादभङ्गरहितः स्वपक्षो लक्ष्यवर्जितः ॥ ५६० ॥
मायास्वप्नोपमं लोकं हेतुप्रत्ययवर्जितम्।
N 335 अहेतुकं सदा पश्यन् विकल्पो न प्रवर्तते ॥ ५६१ ॥
गन्धर्वमृगतृष्णाभं केशोण्डुकनिभं सदा।
सदसत्पक्षविगतं हेतुप्रत्ययवर्जितम्।
अहेतुकं भवं पश्यंश्चित्तधारा विशुध्यते ॥ ५६२ ॥
वस्तु न विद्यते पश्यंश्चित्तमात्रं न विद्यते।
अवस्तुकं कथं चित्तं चित्तमात्रं न युज्यते ॥ ५६३ ॥
वस्तुमालम्बनीकृत्य चित्तं संजायते नृणाम्।
अहेतुकं कथं चित्तं चित्तमात्रं न युज्यते ॥ ५६४ ॥
तथता चित्तमात्रं च आर्यवस्तुनयस्य तु।
विद्यन्ते न च विद्यन्ते न ते मन्नयकोविदाः ॥ ५६५ ॥
ग्राह्यग्राहकभावेन यदि चित्तं प्रवर्तते।
एतद्धि लौकिकं चित्तं चित्तमात्रं न युज्यते ॥ ५६६ ॥
देहभोगप्रतिष्ठाभं स्वप्नवज्जायते यदि।
द्विचित्तता प्रसज्येत न च चित्तं द्विलक्षणम् ॥ ५६७ ॥
स्वधारं हि यथा खड्गं स्वाग्रं वै अङ्गुलिर्यथा।
न छिन्दते न स्पृशते तथा चित्तं स्वदर्शने ॥ ५६८ ॥
न परं न च वै तन्त्रं कल्पितं वस्तुमेव च।
पञ्च धर्मा द्विचित्तं च निराभासे न सन्ति वै ॥ ५६९ ॥
N 336 उत्पादकं च उत्पाद्यं द्विविधं भावलक्षणम्।
उत्पादकं हि संधाय नैःस्वभाव्यं वदाम्यहम् ॥ ५७० ॥
अथ वैचित्र्यसंस्थाने[1] कल्पा च यदि जायते।
आकारो शशशृङ्गे च अर्थाभासं भविष्यति ॥ ५७१ ॥
अर्थाभासं भवेच्चित्तं तदर्थः स्यादकल्पितः।
न च वै कल्पितो ह्यर्थश्चित्तादन्योऽभिलप्यते ॥ ५७२ ॥

---

१ N °संस्थानं; our reading is based on T.

अनादिमति संसारे अर्थो वै नास्ति कुत्रचित् ।
अपुष्टं हि कथं चित्तमर्थाभासं प्रवर्तते ॥ ५७३ ॥
यद्यभावेन पुष्टिः स्याच्छशशृङ्गेऽपि तद्भवेत् ।
न चाभावेन वै पुष्टो विकल्पः संप्रवर्तते ॥ ५७४ ॥
यथापि दानीं नैवास्ति तथा पूर्वेऽपि नास्त्यसौ ।
अनर्थे अर्थसंबद्धं कथं चित्तं प्रवर्तते ॥ ५७५ ॥
तथता शून्यता कोटिर्निर्वाणं धर्मधातुकम् ।
अनुत्पादश्च धर्माणां स्वभावः पारमार्थिकः ५७६ ॥
नास्त्यस्तिपतिता बाला हेतुप्रत्ययकल्पनैः ।
अहेतुकमनुत्पन्नं भवं वै अप्रजानतः ॥ ५७७ ॥
चित्तं ख्याति न दृश्योऽस्ति विशेषोऽनादिहेतुकः ।
अनादावपि नास्त्यर्थो विशेषः केन जायते ॥ ५७८ ॥
यद्यभावेन पुष्टिः स्याद्दरिद्रो धनवान् भवेत् ।
अर्थाभावे कथं चित्तं जायते ब्रूहि मे मुने ॥ ५७९ ॥ N 337
अहेतुकमिदं सर्वं न चित्तं न च गोचरः ।
न च वै पुष्यते चित्तं त्रिभवं क्रियवर्जितम् ॥ ५८० ॥
उत्पादविनिवृत्त्यर्थमनुत्पादप्रसाधनम् ।
अहेतुवादं देशेमि न च बालैर्विभाव्यते ।
अनुत्पन्नमिदं सर्वं न च भावा न सन्ति च ॥ ५८१ ॥
गन्धर्वस्वप्नमायाख्या भावा विद्यन्त्यहेतुकाः ।
अनुत्पन्नान् स्वभावांश्च शून्याः केन वदासि मे ॥ ५८२ ॥
समवायविनिर्मुक्तो यदा भावो न दृश्यते ।
तदा शून्यमनुत्पन्नमस्वभावं वदाम्यहम् ॥ ५८३ ॥
स्वप्नकेशोण्डुकं माया गन्धर्व मृगतृष्णिका ।
अहेतुका पि दृश्यन्ते तथा लोकविचित्रता ॥ ५८४ ॥
समवायस्तथैवैको दृश्याभावान्न विद्यते ।
न तु तीर्थ्यदृष्ट्या प्रलयो समवायो न विद्यते ॥ ५८५ ॥
विगृह्याहेतुवादेन अनुत्पादं प्रसाधयेत् ।
अनुत्पादैः प्रसाध्यन्ते मम नेत्री न नश्यति ॥ ५८६ ॥ N 3
अहेतुवादैर्देश्यन्ते तीर्थ्यानां जायते भयम् ।
कथं केन कुतः कुत्र संभवोऽहेतुको भवेत् ॥ ५८७ ॥

नाहेतुकमहेतुत्वं यदा पश्यन्ति पण्डिताः।
तदा व्यावर्तते दृष्टिर्भङ्गोत्पादानुवादिनी ॥ ५८८ ॥
किमभावो ह्यनुत्पाद उत्पादोत्पत्तिलक्षणम्।
अथ भावस्य नामेदं निरर्थं वा ब्रवीहि मे ॥ ५८९ ॥
न च भावो ह्यनुत्पादो न च प्रत्ययलक्षणम्।
न च भावस्य नामेदं न च नाम निरर्थकम् ॥ ५९० ॥
यत्र श्रावकबुद्धानां तीर्थ्यानां च अगोचरः।
सप्तभूमिगतानां च तदनुत्पादलक्षणम् ॥ ५९१ ॥
हेतुप्रत्ययव्यावृत्तिं कारणस्य निषेधनम्।
चित्तमात्रव्यवस्थानमनुत्पादं वदाम्यहम् ॥ ५९२ ॥
अहेतुवृत्तिं भावानां कल्प्यकल्पविवर्जिताम्।
सदसत्पक्षनिर्मुक्तमनुत्पादं वदाम्यहम् ॥ ५९३ ॥
चित्तदृश्यविनिर्मुक्तं स्वभावद्वयवर्जितम्।
आश्रयस्य परावृत्तिमनुत्पादं वदाम्यहम् ॥ ५९४ ॥
N 339 न बाह्यभावं भावानां न च चित्तपरिग्रहम्।
सर्वदृष्टिप्रहाणं यत्तदनुत्पादलक्षणम् ॥ ५९५ ॥
एवं शून्यास्वभावाद्यान् सर्वधर्मान् विभावयेत्।
न जातु शून्यया शून्या किं त्वनुत्पादशून्यया ॥ ५९६ ॥
कलापः प्रत्ययानां हि प्रवर्तते निवर्तते।
कलापाच्च पृथग्भूतं न जातं न निरुध्यते ॥ ५९७ ॥
भावो न विद्यते ह्यन्यः कलापाच्च पृथक् क्वचित्।
एकत्वेन पृथक्त्वेन यथा तीर्थ्यैर्विकल्प्यते ॥ ५९८ ॥
सदसन्न जायते भावो नासन्न सदसत्क्वचित्।
अन्यत्र हि कलापोऽयं प्रवर्तते निवर्तते ॥ ५९९ ॥
संकेतमात्रमेवेदमन्योन्यापेक्षसंकलात्।
जन्यमर्थं न चैवास्ति पृथक्प्रत्ययसंकलात् ॥ ६०० ॥
जन्याभावो ह्यनुत्पादः तीर्थ्यदोषविवर्जितः।
देशेमि संकलामात्रं न च बालैर्विभाव्यते ॥ ६०१ ॥
यस्य जन्यो हि भावोऽस्ति संकलायाः पृथक् क्वचित्।
अहेतुवादी विज्ञेयः संकलाया विनाशकः ॥ ६०२ ॥
प्रदीपद्रव्यजातीनां व्यञ्जका संकला भवेत्।
यस्य भावो भवेत्कश्चित्संकलायाः पृथक् क्वचित् ॥ ६०३ ॥

अस्वभावो ह्यनुत्पन्नः प्रकृत्या गगनोपमः। N 340
संकलायाः पृथग्भूतो यो धर्मः कल्पितोऽबुधैः॥ ६०४॥
अयमन्यमनुत्पादमार्याणां प्राप्तिधर्मता।
यश्च तस्य अनुत्पादं तदनुत्पादक्षान्तिः स्यात्॥ ६०५॥
यदा सर्वमिमं लोकं संकलामेव पश्यति।
संकलामात्रमेवेदं तदा चित्तं समाध्यते॥ ६०६॥
अज्ञानतृष्णाकर्मादि संकलाध्यात्मिका भवेत्।
[1]खजमृद्दण्डचक्रादि बीजभूतादि बाहिरम्॥ ६०७॥
परतो यस्य वै भावः प्रत्ययैर्जायते क्वचित्।
न[2] संकलामात्रमेवेदं न ते युक्त्यागमे स्थिताः॥ ६०८॥
यदि जन्यो न भावोऽस्ति स्याद्बुद्धिः कस्य प्रत्ययात्।
अन्योन्यप्रत्यया ह्येते ते[3] तेन प्रत्ययाः स्मृताः॥ ६०९॥
उष्णद्रवचलकठिना बालैर्धर्मा विकल्पिताः।
कलापोऽयं न धर्मोऽस्ति अतो वै निःस्वभावता॥ ६१०॥
वैद्या यथातुरवशात्क्रियाभेदं प्रकुर्वते।
न तु शास्त्रस्य भेदोऽस्ति दोषभेदस्तु विद्यते॥ ६११॥
तथाहं सत्त्वसंताने क्लेशदोषैः सुदूषितैः।
इन्द्रियाणां बलं ज्ञात्वा नयं देशेमि बालिशान्॥ ६१२॥ N 341
न क्लेशेन्द्रियभेदेन शासनं भिद्यते मम।
एकमेव भवेद्यानं मार्गमष्टाङ्गिकं शिवम्॥ ६१३॥
घटपटमुकुटविषाणहेतुकशशविषाणानास्तित्वम्।
यद्धेतुसमुत्पन्नं स च नास्ति तेऽवगन्तव्यम्॥ ६१४॥
अस्तित्वसाधकं नास्ति नास्ति नास्ति न युज्यते।
अस्तित्वं नास्त्यपेक्ष्यं हि अन्योन्यापेक्षकारणम्॥ ६१५॥
किंचिदाश्रि[4]त्य पुनः किंचित्ख्यायते यस्य वै मतम्।
अहेतुकं यदाश्रित्य किंचिच्चाहेतुकं न तु॥ ६१६॥
अ[5]थ तदन्यमाश्रित्य तदप्यन्यस्य ख्यायते।
अनवस्था प्रसज्येत किंचिच्च किं च नो भवेत्॥ ६१७॥
आश्रित्य पर्णकाष्ठादीन् यथा माया प्रसज्यते।
वस्तु तद्वत्समाश्रित्य वैचित्र्यं ख्यायते नृणाम्॥ ६१८॥

---

१ C ध्वज°. २ T om. न. ३ N नैतेन for ते तेन which is supported by T. ४ N किंचाशून्यं; our reading is based on C and T. ५ N अर्थमप्यन्य°; our reading is based on C and T.

मायाजालं न पर्णानि न काष्ठं न च शर्करा।
N 342 मायैव दृश्यते बालैर्मायाकारेण चाश्रयम्॥ ६१९॥
तथा वस्तु समाश्रित्य यदि किंचिद्विनश्यति।
दृश्यकाले द्वयं नास्ति कथं किंचिद्विकल्प्यते॥ ६२०॥
विकल्पैर्विकल्पितं नास्ति विकल्पश्च न विद्यते।
विकल्पे ह्यविद्यमाने तु न संसृतिर्न निर्वृतिः॥ ६२१॥
विकल्पे ह्यविद्यमाने तु विकल्पो न प्रवर्तते।
अप्रवृत्तिं कथं चित्तं चित्तमात्रं न युज्यते॥ ६२२॥
अनेकमतिभिन्नत्वाच्छासने नास्ति सारता।
साराभावान्न मोक्षोऽस्ति न च लोकविचित्रता॥ ६२३॥
बाह्यं न विद्यते दृश्यं यथा बालैर्विकल्प्यते।
बिम्बवत्ख्यायते चित्तं वासनैर्भ्रमणीकृतम्॥ ६२४॥
सर्वभावा ह्यनुत्पन्ना असत्सदसंभवाः।
चित्तमात्रमिदं सर्वं कल्पनाभिश्च वर्जितम्॥ ६२५॥
बालैर्भावाः समाख्याताः प्रत्ययैर्न तु पण्डितैः।
स्वभावचित्तनिर्मुक्तश्चित्तमार्योपगं शिवम्॥ ६२६॥
सांख्या वैशेषिका नग्ना विप्राः पाशुपतास्तथा।
N 343 असत्सद्दृष्टिपतिता विविक्तार्थविवर्जिताः॥ ६२७॥
निःस्वभावा ह्यनुत्पन्नाः शून्या मायोपमामलाः।
कस्यैते देशिता बुद्धैस्त्वया च प्रतिवर्णिताः॥ ६२८॥
योगिनां शुद्धचित्तानां दृष्टितर्कविवर्जिताः।
बुद्धा देशेन्ति वै योगं मया च प्रतिवर्णिताः॥ ६२९॥
यदि चित्तमिदं सर्वं कस्मिंल्लोकः प्रतिष्ठितः।
गमनागमनं केन दृश्यते भूतले नृणाम्॥ ६३०॥
शकुनिर्यथा गगने विकल्पेन समीरितः।
अप्रतिष्ठमनालम्ब्यं चरते भूतले यथा॥ ६३१॥
तथा हि देहिनः सर्वे विकल्पेन समीरिताः।
स्वचित्ते चंक्रमन्ते ते गगने शकुनिर्यथा॥ ६३२॥
देहभोगप्रतिष्ठाभं ब्रूहि चित्तं प्रवर्तते।
आभा वृत्तिः कथं केन चित्तमात्रं वदाहि मे॥ ६३३॥
देहभोगप्रतिष्ठाश्च आभा वृत्तिश्च वासनैः।
संजायते अयुक्तानामाभा वृत्तिर्विकल्पनैः॥ ६३४॥

विषयो विकल्पितो भावश्चित्तं विषयसंभवम् ।
दृश्यचित्तपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ६३५ ॥
नाम नाम्नि विसंयुक्तं यदा पश्यति कल्पितम् । N 344
बुद्धिबोद्धव्यरहितं संस्कृतं[१] मुच्यते तदा ॥ ६३६ ॥
एता बुद्धिर्भवेद्बोध्यं नाम नाम्नि विभावनम् ।
ये त्वन्यथावबुध्यन्ते न ते बुद्धा न बोधकाः ॥ ६३७ ॥
पञ्च धर्माः स्वभावाश्च विज्ञानान्यष्ट एव च ।
द्वे नैरात्म्ये भवेत्कृत्स्नो महायानपरिग्रहः ॥ ६३८ ॥
यदा बुद्धिश्च बोद्धव्यं विविक्तं पश्यते जगत् ।
नास्ति नाम विकल्पश्च तदा नाभिप्रवर्तते ॥ ६३९ ॥
क्रियाक्षरविकल्पानां निवृत्तिश्चित्तदर्शनात् ।
अदर्शनात्स्वचित्तस्य विकल्पः संप्रवर्तते ॥ ६४० ॥
चत्वारोऽरूपिणः स्कन्धाः संख्या तेषां न विद्यते ।
भूतैर्विलक्षणै रूपं कथं रूपबहुत्वता ॥ ६४१ ॥
लक्षणस्य परित्यागान्न भूतं न च भौतिकम् ।
अथान्यलक्षणै रूपं कस्मात्स्कन्धैर्न जायते ॥ ६४२ ॥
विमुक्तायतनस्कन्धा यदा पश्यत्यलक्षणाः ।
तदा निवर्तते चित्तं धर्मनैरात्म्यदर्शनात् ॥ ६४३ ॥
विषयेन्द्रियभेदेन विज्ञानं जायतेऽष्टधा । N 345
लक्षणेन भवेत्त्रीणि निराभासे निवर्तते ॥ ६४४ ॥
आलयं हि मनस्यात्मा आत्मीयं ज्ञानमेव च ।
प्रवर्तते द्वयग्राहात्परिज्ञानान्निवर्तते ॥ ६४५ ॥
अन्यानन्यविनिर्मुक्तं यदा पश्यत्यसंचरम् ।
तदा द्वयं न कल्पन्ति आत्मा चात्मीयमेव च ॥ ६४६ ॥
अप्रवृत्तं न पुष्णाति न च विज्ञानकारणम् ।
कार्यकारणनिर्मुक्तं निरुद्धं न प्रवर्तते ॥ ६४७ ॥
विकल्पं चित्तमात्रं च लोकं केन वदाहि मे ।
कारणैश्च विसंयुक्तं लक्ष्यलक्षणवर्जितम् ॥ ६४८ ॥
स्वचित्तं दृश्यते चित्रं दृश्याकारं विकल्पितम् ।
चित्तदृश्यापरिज्ञानादन्यं चित्तार्थसंग्रहात् ॥ ६४९ ॥

---

१ N संस्कृतमुच्यते; our reading is based on C and T.

नास्तित्वदृष्टिर्भवति यदा बुद्ध्या न पश्यति ।
अस्तित्वं हि कथं तस्य चित्तग्राहान्न जायते ॥ ६५० ॥
विकल्पो न भावो नाभावो अतोऽस्तित्वं न जायते ।
चित्तदृश्यपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ६५१ ॥
अप्रवृत्ति विकल्पस्य परावृत्ति निराश्रयः ।
N 346 निवार्य पक्षांश्चत्वारो यदि भावा सहेतुकाः ॥ ६५२ ॥
संज्ञान्तरविशेषोऽयं कृतं केन न साधितः ।
अर्थापत्तिर्भवेत्तेषां कारणाद्वा प्रवर्तते ॥ ६५३ ॥
हेतुप्रत्ययसंयोगात्कारणप्रतिषेधतः ।
नित्यदोषो निवार्यते अनित्या यदि प्रत्ययाः ॥ ६५४ ॥
न संभवो न विभवो अनित्यत्वाद्धि बालिशाम् ।
न हि नश्यमानं किंचिद्वै कारणत्वेन दृश्यते ॥ ६५५ ॥
अदृष्टं हि कथं केन नानित्यो जायते भवः ।
संग्रहैश्च दमेत्सत्त्वान् शीलेन च वशीकरेत् ॥ ६५६ ॥
प्रज्ञया नाशयेद्दृष्टिं विमोक्षैश्च विवर्धयेत् ।
लोकायतमिदं सर्वं यत्तीर्थ्यैर्देश्यते मृषा ॥ ६५७ ॥
कार्यकारणसद्दृष्ट्या स्वसिद्धान्तं न विद्यते ।
अहमेकं स्वसिद्धान्तं कार्यकारणवर्जितः ॥ ६५८ ॥
देशेमि शिष्यवर्गस्य लोकायतविवर्जितः ।
चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं विदृश्यते ।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम् ॥ ६५९ ॥
N 347 यावत्प्रवर्तते चित्तं तावल्लोकायतं भवेत् ।
अप्रवृत्तिर्विकल्पस्य स्वचित्तं पश्यतो जगत् ॥ ६६० ॥
आयं कार्याभिनिर्वृत्तिर्व्ययं कार्यस्य दर्शनम् ।
आयव्ययपरिज्ञानाद्विकल्पो न प्रवर्तते ॥ ६६१ ॥
नित्यमनित्यं कृतकमकृतकं परापरम् ।
एवमाद्यानि सर्वाणि ( तल्ल )लोकायतनं भवेत् ॥ ६६२ ॥
देवासुरमनुष्याश्च तिर्यक्प्रेतयमालयाः ।
गतयः षट् समाख्याता यत्र जायन्ति देहिनः ॥ ६६३ ॥
हीनउत्कृष्टमध्येन कर्मणा तेषु जायते ।
संरक्ष्य कुशलान् सर्वान् विशेषो मोक्ष एव वा ॥ ६६४ ॥

क्षणे क्षणे त्वया यन्मरणं उपपत्ति च ।
देश्यते भिक्षुवर्गस्य अभिप्रायं वदाहि मे ॥ ६६५ ॥
रूपाद्रूपान्तरं यद्वच्चित्तं संभूय भज्यते ।
तस्माद्देशेमि शिष्याणां क्षणजन्मपरंपराम् ॥ ६६६ ॥
रूपे रूपे विकल्पस्य संभवो विभवस्तथा ।
विकल्पो हि भवेज्जन्तुर्विकल्पोऽन्यो न विद्यते ॥ ६६७ ॥
क्षणे क्षणे यन्न युक्तमिदंप्रत्ययभाषितम् ।
रूपग्राहविनिर्मुक्तं न जन्म न च भज्यते ॥ ६६८ ॥ N 348
प्रत्ययाः प्रत्ययोत्पन्ना अविद्यातथतादयः ।
धर्मद्वयेन वर्तन्ते अद्वया तथता भवेत् ॥ ६६९ ॥
प्रत्ययाः प्रत्ययोत्पन्ना यदि धर्मा विशेषिताः ।
नित्यादयो भवेत्कार्यं कारणं प्रत्ययो भवेत् ॥ ६७० ॥
निर्विशिष्टं भवेत्तीर्थ्यैः कार्यकारणसंग्रहात् ।
वादस्तव च बुद्धानां तस्मान्नार्यो महामुने ॥ ६७१ ॥
शरीरे व्याममात्रे च लोकं वै लोकसमुदयम् ।
निरोधगामिनी प्रतिपद्देशयामि जिनौरसान् ॥ ६७२ ॥
स्वभावत्रयग्राहेण ग्राह्यग्राहविदष्टयः ।
लोक्यलोकोत्तरान् धर्मान् विकल्पेन्ति पृथग्जनाः ॥ ६७३ ॥
अतः स्वभावग्रहणं क्रियते पूर्वपक्षया ।
निवारार्थं तु दृष्टीनां स्वभावं न विकल्पयेत् ॥ ६७४ ॥
छिद्रदोषान्न नियमो न वा चित्तं प्रवर्तते ।
प्रवृत्तिद्वयग्राहेण अद्वया तथता भवेत् ॥ ६७५ ॥
अज्ञान तृष्णा कर्म च विज्ञानाद्या अयोनिजाः । N 349
अनवस्थाकृतकत्वं च न कृत्वा जायते भवः ॥ ६७६ ॥
चतुर्विधश्च प्रध्वंसो भावानां कथ्यतेऽबुधैः ।
द्विधावृत्तेर्विकल्पस्य भावाभावो न विद्यते ।
चातुष्कोटिकनिर्मुक्तं दर्शनद्वयवर्जितम् ॥ ६७७ ॥
द्विधावृत्तिविकल्पः स्याद्दृष्ट्वा नाभिप्रवर्तते ।
अनुत्पन्नेषु भावेषु बुद्धेर्व्युत्थानभावतः ॥ ६७८ ॥
उत्पन्नेष्वपि भावेषु तत्कल्पत्वान्न कल्पयेत् ।
युक्तिं वदाहि मे नाथ द्विधादृष्टिनिवारणात् ॥ ६७९ ॥

यथाहमन्ये च सदा नास्त्यस्ति न विसंकरेत् ।
तीर्थवादअसंसृष्टाः श्रावकैर्जिनवर्जिताः ।
जिनाभिसमयचर्यां च जिनपुत्रविनाशतः ॥ ६८० ॥

विमोक्षहेत्वहेतुश्चाप्यनुत्पादैकलक्षणः ।
पर्यायैर्मोहयन्त्येतां वर्जनीयां सदा बुधैः ॥ ६८१ ॥

मेघाभ्रकूटेन्द्रधनुःप्रकाशा
मरीचिकेशोण्डुकमायतुल्याः ।
भावा हि सर्वे स्वविकल्पसंभवा-
स्तीर्थ्या विकल्पेन्ति जगत्स्वकारणैः ॥ ६८२ ॥

अनुत्पादश्च तथता भूतकोटिश्च शून्यता ।
रूपस्य नामान्येतानि अभावं न विकल्पयेत् ॥ ६८३ ॥

N 350 हस्तः करो यथा लोके इन्द्रः शक्रः पुरंदरः ।
तथा हि सर्वभावानामभावं न विकल्पयेत् ॥ ६८४ ॥

रूपाच्च शून्यता नान्या अनुत्पादं तथैव च ।
न कल्पयेदनन्यत्वाद्दृष्टिदोषः प्रसज्यते ॥ ६८५ ॥

संकल्पश्च विकल्पश्च वस्तुलक्षणसंग्रहात् ।
दीर्घह्रस्वादिमाण्डल्यं परिकल्पस्य संग्रहात् ॥ ६८६ ॥

संकल्पो हि भवेच्चित्तं परिकल्पो मनस्तथा ।
विकल्पो मनविज्ञानं लक्ष्यलक्षणवर्जितम् ॥ ६८७ ॥

यच्च तीर्थ्यैरनुत्पादो यच्च मन्नयदृष्टिभिः ।
कल्प्यते निर्विशिष्टोऽयं दृष्टिदोषः प्रसज्यते ॥ ६८८ ॥

प्रयोजनमनुत्पादमनुत्पादार्थमेव च ।
ये वै जानन्ति युक्तिज्ञास्तेऽभिबुध्यन्ति मन्नयम् ॥ ६८९ ॥

प्रयोजनं दृष्टिसंकोचमनुत्पादमनालयम् ।
अर्थद्वयपरिज्ञानादनुत्पादं वदाम्यहम् ॥ ६९० ॥

भावा विद्यन्त्यनुत्पन्ना न वा ब्रूहि महामुने ।
अहेतुवादोऽनुत्पादो प्रवृत्तिस्तीर्थदर्शनम् ॥ ६९१ ॥

N 351 अहेतुवादोऽनुत्पादो वैषम्यतीर्थदर्शनम् ।
अस्तिनास्तिविनिर्मुक्तं चित्तमात्रं वदाम्यहम् ॥ ६९२ ॥

उत्पादमनुत्पादं वर्जयेद्दृष्टिहेतुकम् ।
अहेतुवादेऽनुत्पादे उत्पादे कारणाश्रयः ॥ ६९३ ॥

अनाभोगक्रिया नास्ति क्रिया चेद्दृष्टिसंकरः ।
उपायप्रणिधानाद्यैर्दृष्टिमेव वदाहि मे ।
असत्त्वात्सर्वधर्माणां मण्डलं जायते कथम् ॥ ६९४ ॥
ग्राह्यग्राहकविसंयोगान्न प्रवृत्तिर्न निर्वृतिः ।
भावाद्भावान्तरं दृष्टिं चित्तं वै तत्समुत्थितम् ॥ ६९५ ॥
अनुत्पादश्च धर्माणां कथमेतद्वदाहि मे ।
सत्त्वाश्चेन्नावबुध्यन्ते अत एतत्प्रकाश्यते ॥ ६९६ ॥
पूर्वोत्तरविरोधं च सर्वं भाष्य महामुने ।
तीर्थदोषविनिर्मुक्तं विषमाहेतुवर्जितम् ॥ ६९७ ॥
अप्रवृत्तिर्निवृत्तिश्च ब्रूहि मे वादिनांवर ।
अस्तिनास्तिविनिर्मुक्तं फलहेत्वविनाशकम् ॥ ६९८ ॥
भूमिक्रमानुसंधिश्च ब्रूहि मे धर्मलक्षणम् ।
द्वयान्तपतितो लोको दृष्टिभिर्व्याकुलीकृतः ॥ ६९९ ॥
अनुत्पादा उत्पादाद्यैः शमहेतुर्न बुध्यते । N 352
मण्डलं हि न मे किंचिन्न च देशेमि धर्मताम् ॥ ७०० ॥
द्वये सति हि दोषः स्याद्द्वयं बुद्धैर्विशोधितम् ।
शून्याश्च क्षणिका भावा निःस्वभावा ह्यजातिकाः ॥ ७०१ ॥
कुदृष्टिवादसंछन्नैः कल्प्यन्ते न तथागतैः ।
प्रवृत्तिं च निवृत्तिं च विकल्पस्य वदाहि मे ॥ ७०२ ॥
यथा येन प्रकारेण जायते विषयो मुखम् ।
वर्णपुष्कलसंयोगात्प्रपञ्चैः समुदानितम् ॥ ७०३ ॥
रूपं दृष्ट्वा बहिर्धा वै विकल्पः संप्रवर्तते ।
तस्यैव हि परिज्ञानाद्यथाभूतार्थदर्शनात् ।
आर्यगोत्रानुकूलं च चित्तं नाभिप्रवर्तते ॥ ७०४ ॥
प्रत्याख्याय तु भूतानि भावोत्पत्तिर्न विद्यते ।
भूताकारं सदा चित्तमनुत्पन्नं विभावयेत् ॥ ७०५ ॥
मा विकल्पं विकल्पेथ निर्विकल्पा हि पण्डिताः ।
विकल्पं विकल्पयंस्तस्य द्वयमेव न निर्वृतिः ॥ ७०६ ॥
अनुत्पादप्रतिज्ञस्य माया च दृश्यते नयः ।
मायानिर्हेतुसंभूतं हानिसिद्धान्तलक्षणम् ॥ ७०७ ॥

---

१ N नयेत्; our reading is based on T.

N 353 बिम्बवद्दृश्यते चित्तमनादिमतिभावितम्।
अर्थाकारं न चार्थोऽस्ति यथाभूतं विभावयेत्॥ ७०८॥
यथा हि दर्पणे रूपमेकत्वान्यत्ववर्जितम्।
दृश्यते न च तन्नास्ति तथा चोत्पादलक्षणम्॥ ७०९॥
गन्धर्वमायादि यथा हेतुप्रत्ययलक्षणाः।
तथा हि सर्वभावानां संभवो न ह्यसंभवः॥ ७१०॥
विकल्पः पुरुषाकारो द्विधावृत्त्या प्रवर्तते।
आत्मधर्मोपचारैश्च न च बालैर्विभाव्यते॥ ७११॥
विपुलप्रत्ययाधीनः श्रावकोऽपि ह्यर्हंस्तथा।
स्वबलाधीनं जिनाधीनं पञ्चमं श्रावकं नयेत्॥ ७१२॥
कालान्तरं च प्रध्वस्तं परमार्थेतरेतरम्।
चतुर्विधमनित्यत्वं बालाः कल्पेन्त्यकोविदाः॥ ७१३॥
द्वयान्तपतिता बाला गुणाणुप्रकृतिकारणैः।
मोक्षोपायं न जानन्ति सदसत्पक्षसंग्रहात्॥ ७१४॥
N 354 अङ्गुल्यग्रं यथा बालैश्चन्द्रं गृह्णन्ति दुर्मतिः।
तथा ह्यक्षरसंसक्तास्तत्त्वं नावेन्ति मामकम्॥ ७१५॥
विलक्षणानि भूतानि रूपभावप्रवर्तका।
भूतानां संनिवेशोऽयं न भूतैर्भौतिकं कृतम्॥ ७१६॥
अग्निना दह्यते रूपमब्धातुः क्लेदनात्मकः।
वायुना कीर्यते रूपं कथं भूतैः प्रवर्तते॥ ७१७॥
रूपं स्कन्धश्च विज्ञानं द्वयमेतन्न पञ्चकम्।
पर्यायभेदं स्कन्धानां शतधा देशयाम्यहम्॥ ७१८॥
चित्तचैत्तस्य भेदेन वर्तमानं प्रवर्तते।
व्यतिभिन्नानि रूपाणि चित्तं रूपं न भौतिकम्॥ ७१९॥
नीलाद्यपेक्षणं श्वेतं श्वेतं नीलं ह्यपेक्षणम्।
कार्यकारणमुत्पाद्य शून्यता अस्ति नास्ति च॥ ७२०॥
साधनं साधकं साध्यं शीतोष्णे लक्ष्यलक्षणम्।
एवमाद्यानि सर्वाणि तार्किकैर्न प्रसाधिताः॥ ७२१॥
चित्तं मनश्च षड्वान्यविज्ञानान्यात्मसंयुता।
एकत्वान्यत्वरहिता आलयोऽयं प्रवर्तते॥ ७२२॥
सांख्या वैशेषिका नग्नास्तार्किका ईश्वरोदिताः।
सदसत्पक्षपतिता विविक्तार्थत्रिवर्जिताः॥ ७२३॥

संस्थानाकृतिविशेषो भूतानां नास्ति भौतिकम् । N 355
तीर्थ्या वदन्ति जन्म भूतानां भौतिकस्य च ॥ ७२४ ॥
अनुत्पन्ना यतो येऽन्ये तीर्थ्याः कल्पन्ति कारणैः ।
न च बुध्यन्ति मोहेन सदसत्पक्षमाश्रिताः ॥ ७२५ ॥
चित्तेन सह संयुक्तं विसंयुक्तं मनादिभिः ।
विशुद्धलक्षणं सत्त्वं ज्ञानेन सह तिष्ठति ॥ ७२६ ॥
कर्म यच्च भवेद्रूपं स्कन्धविषयहेतुकाः ।
सत्त्वाश्च निरुपादाना आरूप्ये नावतिष्ठति ॥ ७२७ ॥
नैरात्म्यं सत्त्ववादित्वं[1] सत्त्वाभावात्प्रसज्यते ।
नैरात्म्यवादिनो च्छेदो विज्ञानस्याप्यसंभवः ॥ ७२८ ॥
चत्वारः स्थितयस्तस्य रूपाभावात्कथं भवेत् ।
अध्यात्मबाह्याभावाद्विज्ञानं न प्रवर्तते ॥ ७२९ ॥
अन्तराभविकाः स्कन्धाः यथैवेच्छन्ति तार्किकाः ।
तथारूप्योपपन्नस्य भवोऽरूपो न चास्ति किम् ॥ ७३० ॥
अप्रयत्नेन मोक्षः स्यात्सत्त्वविज्ञानयोर्विना ।
तीर्थ्यवादो न संदेहो न च बुध्यन्ति तार्किकाः ॥ ७३१ ॥
रूपं च विद्यते तत्र आरूप्ये नास्ति दर्शनम् ।
तदभावो न सिद्धान्तो न यानं न च यायिनम् ॥ ७३२ ॥ N 356
इन्द्रियैः सह संयुक्तं विज्ञानं वासनोद्भवम् ।
अष्टविधैकदेशं[2] हि क्षणे काले न गृह्णन्ति ॥ ७३३ ॥
न प्रवर्तति यदा रूपं इन्द्रिया न च इन्द्रियैः ।
अतो हि देशेति भगवान् क्षणिका इन्द्रियादयः ॥ ७३४ ॥
अनिर्धार्य कथं रूपं विज्ञानं संप्रवर्त्स्यते ।
अप्रवृत्तं कथं ज्ञानं संसारं जनयिष्यति ॥ ७३५ ॥
उत्पत्त्यनन्तरं भङ्गं न देशेन्ति विनायकाः ।
नैरन्तर्यं न भावानां विकल्पस्पन्दिते गतौ ॥ ७३६ ॥
इन्द्रिया इन्द्रियार्थाश्च मूढानां न तु पण्डिताः ।
बाला गृह्णन्ति नामेन आर्या वै अर्थकोविदाः ॥ ७३७ ॥
षष्ठं हि निरुपादानः सोपादानो न गृह्यते ।
अनिर्धार्यं वदन्त्यार्या अस्तिदोषैर्विवर्जिताः ॥ ७३८ ॥

---

१ N सत्यवादित्वं; T सत्त्ववादस्य. २ N अष्टवदेकदेशं; our reading is based on T.

N 357 शाश्वतोच्छेदभीताश्च तार्किका ज्ञानवर्जिताः ।
संस्कृतासंस्कृतात्मानं न विशेषन्ति बालिशाः ॥ ७३९ ॥
एकत्वे विद्यते दानमन्यत्वे चापि विद्यते ।
चित्तेन सह चैकत्वमन्यत्वं वै मनादिभिः ॥ ७४० ॥
निर्धार्यते यदा दानं चित्तं चैत्ताभिशब्दितम् ।
उपादानात्कथं तत्र एकत्वेनावधार्यते ॥ ७४१ ॥
सोपादानोपलब्धिश्च कर्मजन्मक्रियादिभिः ।
अग्निवत्साधयिष्यन्ति सदृशासदृशैर्नयैः ॥ ७४२ ॥
यथा हि अग्निर्युगपद्दह्यते दाह्यदाहकौ ।
सोपादानस्तथा ह्यात्मा तार्किकैः किं न गृह्यते ॥ ७४३ ॥
उत्पादाद्वाप्यनुत्पादाच्चित्तं वै भास्वरं सदा ।
दृष्टान्तं किं न कुर्वन्ति तार्किका आत्मसाधकाः ॥ ७४४ ॥
विज्ञानगह्वरे मूढास्तार्किका नयवर्जिताः ।
इतस्ततः प्रधावन्ति आत्मवादचिकीर्षया ॥ ७४५ ॥
प्रत्यात्मगतिगम्यश्च आत्मा वै शुद्धिलक्षणम् ।
गर्भस्तथागतस्यासौ तार्किकाणामगोचरः ॥ ७४६ ॥
उपादानउपादात्रोर्विभागस्कन्धयोस्तथा ।
लक्षणं यदि जानाति ज्ञानं संजायते नयम् ॥ ७४७ ॥
N 358 आलयं गर्भसंस्थानं मतं तीर्थ्यानुवर्णितम् ।
आत्मना सह संयुक्तं न च धर्माः प्रकीर्तिताः ॥ ७४८ ॥
एतेषां प्रविभागेन विमोक्षः सत्यदर्शनम् ।
भावानां दर्श्यहेयानां क्लेशानां स्याद्विशोधनम् ॥ ७४९ ॥
प्रकृतिप्रभास्वरं चित्तं गर्भं ताथागतं शुभम् ।
उपादानं हि सत्त्वस्य अन्तानन्तविवर्जितम् ॥ ७५० ॥
कान्तिर्यथा सुवर्णस्य जातरूपं च शर्करम् ।
परिकर्मेण पश्यन्ति सत्त्वं स्कन्धालयैस्तथा ॥ ७५१ ॥
न पुद्गलो न च स्कन्धा बुद्धो ज्ञानमनास्रवम् ।
सदाशान्ति विभावित्वा गच्छामि शरणं ह्यहम् ॥ ७५२ ॥
प्रकृतिप्रभास्वरं चित्तमुपक्लेशैर्मनादिभिः ।
आत्मना सह संयुक्तं देशेति वदतांवरः ॥ ७५३ ॥
प्रकृतिप्रभास्वरं चित्तं मनाद्यस्तस्य वै परः ।
तैराचितानि कर्माणि यतः क्लिश्यन्ति तावुभौ ॥ ७५४ ॥

